Digitized by Arya Samaj Foundation Chennai and eGangotri



दूर्वाप्रवालकवलान्स्वयमपि सलिलमवततार । ततश्च प्रक्षालितकरचरणयुगलश्चातक इव कृत्वा जलमयमाहारं चक्राह्व इवास्वाद्य मृणालशकलानि शिशिरांशुरिव कराग्रैः स्पृष्ट्वा कुमुदानि फणीवाभिनन्द्य जलतरंगवातानन‌ङ्गशरप्रहारातुर इवोरसि निधाय नलिनीदलोत्तरीयमरण्यगज इव शीकरार्द्रपुष्करोपशोभितकरः सरःसलिलादुदगात् । प्रत्यग्रभग्नशिशिरैश्च कमलिनीपलाशैर्लतामण्डपपरिक्षिप्ते शिलातले संस्तरमास्तीर्य निधाय शिरसि पिण्डीकृतमुत्तरीयं निषसाद । मुहूर्तं विश्रान्तश्च तस्य सरस उत्तरे तीरप्रदेशे समुच्चरन्तमुन्मुक्तकवलेन निश्चलश्रवणपुटेन तन्मुखीभूतेनोद्ग्रीवेणेन्द्रायुधेन प्रथममाकर्णितं श्रुतिसुभगं वीणातंत्रीझंकारमिश्रममानुषं गीतशब्दमशृणोत् । श्रुत्वा च कुतोऽत्र विगतमर्त्यसंपाते प्रदेशे गीतध्वनेः सम्भूतिरिति समुपजातकौतुकः कमलिनीपत्रसंस्तरादुत्थाय तामेव गीतसम्पातसूचितां दिशं चक्षुः प्राहिणोत् । अतिदवीयस्तया तु तस्य प्रदेशस्य प्रयत्नव्यापृतलोचनोऽपि विलोकयन्न किंचिद्ददर्श । तमेव केवलमनवरतं गीताशब्दं शुश्राव । कुतूहलवशाच्च गीतध्वनितप्रभवजिज्ञासया कृतगमनबुद्धिर्दत्तपर्याणमिन्द्रायुधमारुह्य प्रियगीतैः प्रथमप्रस्थितैरप्रार्थितैरपि वनहरिणैरुपदिश्यमानवर्त्मा पश्चिमया सरस्तीरवनलेखया निमित्तीकृत्य तं गीतध्वनिमभिप्रतस्थे ।

क्रमेण च संमुखागतैराह्लादिभिः पुण्यैः कैलासमारुतैरभिनन्द्यमानो गत्वा च तं प्रदेशं सर्वतो मरकतहरितैः पादपैः परिवृतं चन्द्रप्रभनाम्नस्तस्य सरसः पश्चिमे तीरे कैलासपादस्य ज्योत्स्नावदातया प्रभया धवलयतस्तं प्रदेशं तलभागसंनिविष्टं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


भगवतः शूलपाणेः शून्यं सिद्धायतनमपश्यत् । तच्च पवनो रितस्ततः समापतद्भिः केतकीगर्भधूलिभिर्धवलीक्रियमाण पशुपतिदर्शनहेतोर्बलादिव प्रतिपाद्यमानो भस्मव्रतमायतन पुण्यैरिव परिगृह्यमाणः प्रविश्याद्राक्षीच्चतुःस्तम्भस्फटिकमण्ड तलप्रतिष्ठितमचिरोद्धृतैरार्द्रार्द्रशिखरगलज्जलबिन्दुभिः र्चनमशेषत्रिभुवनवन्दितचरणं चराचरगुरुं चतुर्मुखं भ त्र्यम्बकम् ।

तस्य च दक्षिणां मूर्तिमाश्रित्याभिमुखीमासीनामुग्र ब्रह्मासनां निर्मलां निर्ममां निरहंकारां निर्मत्सराममानुष दिव्यत्वादपरिज्ञायमानवयःप्रमाणामप्यष्टादशवर्षदेशीयामिवोपल माणां प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्श । ततोऽवतीर्य शाखायां बद्ध्वा तुरगमुपसृत्य भगवते भक्त्या प्रणम्य त्रि नाय तामेव दिव्ययोषितमनिमिषपक्ष्मणा निश्चलनिबद्धल चक्षुषा पुनर्निरूपयामास । उदपादि चास्य तस्या रूप कान्त्या प्रशान्त्या चाविर्भूतविस्मयस्य मनसि । अहो ज जन्तूनामसमर्थितोपनतान्यापतन्ति वृत्तान्तान्तराणि । तथा हि मृगयायां यदृच्छया निरर्थकमनुबध्नता तुरगमुखमिथुनमय मनोहरो मानवानामगम्यो दिव्यजनसंचरणोचितः प्रदेशो वी क्षितेः । अत्र च सलिलमन्विष्यमाणेन हृदयहारि सिद्धजनोप जलं सरो दृष्टम् । तत्तीरलेखाविश्रान्तेन चामानुषं गीतमाकर्णि तच्चानुसरता मानुषदुर्लभदर्शना दिव्यकन्यकेयमालोकित न हि मे संशीतिरस्या दिव्यतां प्रति । आकृतिरेवानुमापयत नुषताम् । कुतश्च मर्त्यलोके संभूतिरेवंविधानां गन्धर्वध्वानिर्वि णाम् । तद्यदि मे सहसा दर्शनपथान्नापयाति नारोहति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कैलासशिखरं नोत्पतति वा गगनतलं ततः का त्वं किमभिधाना वा किमर्थं वा प्रथमे वयसि प्रतिपन्ना व्रतमिति सर्वमेवैतदेनामुपसृत्य पृच्छामि । अतिमहानयमवकाश आश्चर्याणाम् । इत्यवधार्य तस्यामेव स्फटिकमण्डपिकायामन्यतमं स्तम्भमाश्रित्य समुपाविष्टो गीतसमाप्त्यवसरं प्रतीक्षमाणस्तस्थौ ।

अथ गीतावसाने मूकीभूतवीणा सा कन्यका समुत्थाय प्रदक्षिणीकृत्य कृतहरप्रणामा परिवृत्य स्वभावधवलया दृष्ट्या समाश्वासयन्ती पुण्यैरिव स्पृशन्ती तीर्थजलैरिव प्रक्षालयन्ती तपोभिरिव पावयन्ती शुद्धिमिव कुर्वाणा वरदानमिवोपपादयन्ती पवित्रतामिव नयन्ती चन्द्रापीडमाबभाषे । स्वागतमतिथये । कथमिमां भूमिमनुप्राप्तो महाभागस्तदुत्तिष्ठागम्यतामनुभूयतामतिथिसत्कार इति । एवमुक्तस्तु तया संभाषणमात्रेणैवानुगृहीतमात्मानं मन्यमान उत्थाय भक्त्या कृतप्रणामो भगवति यथाज्ञापयसीत्यभिधाय दर्शितविनयः शिष्य इव तां व्रजन्तीमनुवव्राज । व्रजंश्च समर्थयामास । हन्त तावन्नेयं मां दृष्ट्वा तिरोभूता । कृतं हि मे कुतूहलेन प्रश्नाशया हृदि पदम् । यथा चेयमस्यास्तपस्विजनदुर्लभदिव्यरूपाया अपि दाक्षिण्यातिशया प्रतिपत्तिरभिजाता विभाव्यते तथा संभावयामि नियतमियमात्मोदन्तमभ्यर्थ्यमाना मया कथयिष्यतीति । एवं च कृतमतिः पदशतमात्रमिव गत्वा निरन्तरैर्दिवापि रजनीसमयमिव दर्शयद्भिस्तमालतरुभिरन्धकारितपुरोभागामिन्दुमण्डलेनेव टङ्कोत्कीर्णेन शङ्खमयेन भिक्षाकपालेनाधिष्ठितां संनिहितभस्मालाबुकां गुहामद्राक्षीत् । तस्याश्च द्वारि शिलातले समुपविष्टो वल्कलशयनशिरोभागविन्यस्तवीणां ततः पर्णपुटेन निर्झरादागृहीतमर्घ्यसलिलमादाय



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तां कन्यकां समुपस्थितामलमतियन्त्रणया कृतमतिप्रसादेन वति प्रसीद विमुच्यतामयमत्यादरस्त्वदीयमालोकनमपि सर्व प्रशमनमत्रमर्षणमिव पवित्रीकरणायालमास्यतामित्यब्रवीत् । बध्यमानश्च तया तां सर्वामतिथिसपर्यामतिदूरावनतेन शि सप्रश्रयं प्रतिजग्राह । कृतातिथ्यया च तया द्वितीयशिलातले विष्टया क्षणमिव तूष्णीं स्थित्वा क्रमेण परिपृष्टो दिग्विजयादा किंनरमिथुनानुसरणप्रसङ्गेनागमनप्रकारमात्मनः सर्वमाचचक्षे विदितसकलवृत्तान्ता चोत्थाय सा कन्यका भिक्षाकपालमा तेषामायतनतरूणां तलेषु विचचार । अचिरेण च तस्याः स्व पतितैः फलैरपूर्यत भिक्षाभाजनम् । आगत्य च तेषां फल मुपयोगाय नियुक्तवती चन्द्रापीडम् । आसीच्च तस्य चेतसि नास्ति खल्वसाध्यं नाम तपसाम् । किमतः परमाश्चर्यं य व्यपगतचेतना अपि सचेतना इवास्यै भगवत्यै समतिसृज फलान्यात्मानुग्रहमुपपादयन्ति वनस्पतयः । चित्रमिदमालोकि मस्माभिरदृष्टपूर्वमित्यधिकतरोपजातविस्मयश्चोत्थाय तमेव प्रदे मिन्द्रायुधमानीय व्यपनीतपर्याणं नातिदूरे संयम्य निर्झरज निर्वर्तितस्नानविधिस्तान्यमृतरसस्वादून्युपयुज्य फलानि पीत्वा तुषारशिशिरं प्रस्रवणजलमुपस्पृश्य चैकान्ते तावदवतस्थे त्तयापि कन्यया कृतो जलफलमूलमयेष्वाहारेषु प्रणयः । इति परिसमापिताहारां निर्वर्तितसन्ध्योचिताचारां शि विश्रब्धमुपविष्टां निभृतमुपसृत्य नातिदूरे समुपविश्य मु मिव स्थित्वा चन्द्रापीडः सविनयमवादीत् । भगवति त्वत्प्र प्राप्तिप्रोत्साहितेन कुतूहलेनाकुलीक्रियमाणो मानुषतासु लघिमा बलादनिच्छन्तमपि मां प्रश्नकर्मणि नियोजयति । जन

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हि प्रभुप्रसादलवोऽपि प्रागल्भ्यमधीरप्रकृतेः । स्वल्पाप्येकदेशावस्थानकालकला परिचयमुत्पादयति । अणुरप्युपचारपरिग्रहः प्रणयमारोपयति तद्यदि नातिखेदकरमिव ततः कथनेनात्मानमनुग्राह्यमिच्छामि । अतिमहत्खलु भवद्दर्शनात्प्रभृति मे कौतुकमस्मिन्विषये । कतरन्मरुतामृषीणां गन्धर्वाणां गुह्यकानामप्सरसां वा कुलमनुगृहीतं भगवत्या जन्मना । किमर्थं वास्मिन्कुसुमसुकुमारे नवे वयसि व्रतग्रहणम् । क्वेदं वयः । क्वेदं तपः । क्वेयमाकृतिः । क्व चायं लावण्यातिशयः । क्वेयमिन्द्रियाणामुपशान्तिः । तदद्भुतमिव मे प्रतिभाति । किंनिमित्तं वानेकसिद्धसाध्यसंबाधानि सुरलोकसुभगान्यपहाय दिव्याश्रमपदान्येकाकिनी वनमिदममानुषमधिवससि । कश्चायं प्रकारो यत्तैरेव पञ्चभिर्महाभूतैरारब्धमीदृशीं धवलतां धत्ते शरीरम् । नेदमस्माभिरन्यत्र दृष्टश्रुतपूर्वम् । अपनयतु नः कौतुकम् । आवेदयतु भवती सर्वम् । इत्येवमभिहिता सा किमप्यन्तर्ध्यायन्ती तूष्णीं मुहूर्तमिव स्थित्वा निःश्वस्य स्थूलस्थूलैरन्तर्गतां हृदयशुद्धिमिवादाय निर्गच्छद्भिरिन्द्रियप्रसादमिव वर्षद्भिस्तपोरसनिस्यन्दमिव स्रवद्भिर्लोचनविषयं धवलिमानमिव द्रवीकृत्य पातयद्भिरच्छाच्छैरमलकपोलस्थलस्खलितैरवशीर्णहारमुक्तमुक्ताफलतरलपातैरनुबद्धबिन्दुभिर्वल्कलावृतकुचशिखरजर्जरितशीकरैरश्रुभिरामीलितलोचना निःशब्दं रोदितुमारेभे ।

तां च प्ररुदितां दृष्ट्वा चन्द्रापीडस्तत्क्षणमचिन्तयत् । अहो दुर्निवारता व्यसनोपनिपातानां यदीदृशीमप्याकृतिमनभिभवनीयामात्मीयां कुर्वन्ति । सर्वथा न कंचन न स्पृशन्ति शरीरधर्माणमुपतापाः । बलवती हि द्वंद्वानां प्रवृत्तिः । इदमपरमधिकतर-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मुपजनितमतिमहन्मनसि मे कौतुकमस्या बाष्पसलिलपातेन । न ह्यल्पीयसा शोककारणेन क्षेत्रीक्रियन्त एवंविधा मूर्तयः । न हि क्षुद्रनिर्घातपाताभिहता चलति वसुधा । इति संवर्धितकुतूहलश्च शोकस्मरणहेतुतामुपगतमपराधिनमिवात्मानमवगच्छन्नुत्थाय प्रस्रवणादञ्जलिना मुखप्रक्षालनोदकमुपनिन्ये । सा तु तदनुरोधादविच्छिन्नबाष्पजलधारासंतानापि किंचित्कषायितोदरे प्रक्षाल्य लोचने वल्कलोपान्तेन वदनमपमृज्य दीर्घमुष्णं च निःश्वस्य शनैः प्रत्यवादीत् । राजपुत्र किमनेनातिनिर्घृणहृदयाया मम मन्दभाग्यायाः पापाया जन्मनः प्रभृति वैराग्यवृत्तान्तेनाश्रवणीयेन श्रुतेन । तथापि यदि महत्कुतूहलं तत्कथयामि । श्रूयताम् ।

एतत्प्रायेण कल्याणाभिनिवेशिनः श्रुतिविषयमापतितमेव यथा विबुधसद्मन्यप्सरसो नाम कन्यकाः सन्तीति । तासां चतुर्दश कुलानि । एकं भगवतः कमलयोनेर्मनसः समुत्पन्नम् । अन्यद्वेदेभ्यः संभूतम् । अन्यदग्नेरुद्भूतम् । अन्यत्पवनात्प्रसूतम् । अन्यदमृतान्मथ्यमानादुत्थितम् । अन्यज्जलाज्जातम् । अन्यदर्ककिरणेभ्यो निर्गतम् । अन्यत्सोमरश्मिभ्यो निष्पतितम् । अन्यद्भूमेरुद्भूतम् । अन्यत्सौदामिनीभ्यः प्रवृत्तम् । अन्यन्मृत्युना निर्मितम् । अपरं मकरकेतुना समुत्पादितम् । अन्यत्तु दक्षस्य प्रजापतेरतिप्रभूतानां सुतानां मध्ये द्वे सुते मुनिररिष्टा च बभूवतुस्ताभ्यां गन्धर्वैः सह कुलद्वयं जातम् । एवमेतान्येकत्र चतुर्दश कुलानि । गन्धर्वाणां तु दक्षात्मजाद्वितयसंभवं तदेव कुलद्वयं जातम् । तत्र मुनेस्तनयाश्चित्रसेनादीनां पञ्चदशानां भ्रातॄणामभ्यधिको गुणैः षोडशश्चित्ररथो नाम समुत्पन्नः । स किल सकलत्रिभुवनप्रख्यातपराक्रमो भगवताखण्डलेन सुहृच्छब्देनोप-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



बृंहितप्रभावः सर्वेषां गन्धर्वाणामाधिपत्यं शैशव एवाप्तवान् । इतश्च नातिदूरे तस्यास्मांद्भारतवर्षादुत्तरेणानन्तरे किंपुरुषनाम्नि वर्षे वर्षपर्वतो हेमकूटो नाम निवासः । तत्र च तद्भुजयुगलपरिपालितान्यनेकानि गन्धर्वशतसहस्राणि प्रतिवसन्ति । तेनैव चेदं चैत्ररथं नामातिमनोहरं काननं निर्मितम् । इदं चाच्छोदाभिधानमतिमहत्सरो निखानितम् । अयं च भवानीपतिरुपरचितो भगवान् । अरिष्टायास्तु पुत्रस्तुम्बुरुप्रभृतीनां सोदर्याणां षण्णां ज्येष्ठो हंसो नाम जगद्विदितो गन्धर्वस्तस्मिन्द्वितीये गन्धर्वकुले गन्धर्वराजेन चित्ररथेनैवाभिषिक्तो बाल एव राज्यपदमासादितवान् । अपरिमितगन्धर्वबलपरिवारस्य तस्यापि स एव गिरिरधिवासः । यत्तु तत्सोममयूखसंभवमप्सरसां कुलं तस्मात्किरणजालानुसारगलितेन सकलेनेव रजनिकरकलाकलापलावण्येन निर्मिता त्रिभुवननयनाभिरामा भगवती द्वितीयेव गौरी गौरीति नाम्ना हिमकरकिरणावदातवर्णा कन्यका प्रसूता । तांच द्वितीयगन्धर्वकुलाधिपतिर्हंसो मन्दाकिनीमिव क्षीरसागरः प्रणयिनीमकरोत् । सा तु भगवता मकरकेतनेनेव रतिः शरत्समयेनेव कमलिनी हंसेन संयोजिता सदृशसमागमोपजनितामतिमहतीं मुदमुपगतवती । निखिलान्तःपुरस्वामिनी च तस्याभवत् ।

तयोश्च तादृशयोर्महात्मनोरहमीदृशी विगतलक्षणा शोकाय केवलमनेकदुःखसहस्रभाजनमेकैवात्मजा समुत्पन्ना । तातस्त्वनपत्यतया सुतजन्मातिरिक्तेन महोत्सवेन मम जन्माभिनंदितवान् । अवाप्ते च दशमेऽहनि कृतयथोचितसमाचारो महाश्वेतेति यथार्थमेव नाम कृतवान् । साहं पितृभवने बालतया कल-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मधुरप्रलापिनी वीणेव गन्धर्वाणामङ्कादङ्कं संचरन्त्यविदितशो- ॰व्यासमनोहरं शैशवमतीतवती । क्रमेण च कृतं मे वपु वसन्त इव मधुमासेन मधुमास इव नवपल्लवेन नवपल्लव कुसुमेन कुसुम इव मधुकरेण मधुकर इव मदेन नवयौव पदम् ।

अथ सकलजीवलोकहृदयानन्ददायकेषु मधुमासदिवसेष्वे दाहमम्बया सह मधुमासविस्तारितशोभमिदमच्छोदं स स्नातुमभ्यागमम् । अत्र च स्नानार्थमागतया भगवत्या पार्व तटशिलातलेषु विलिखितानि सभृङ्गरिटीनि त्र्यम्बकप्रतिबि कानि वन्दमाना रम्योऽयं लतामण्डपः सुपुष्पितोऽयं सहका तरुः शिशिरेयं चन्दनवीथिका शोभनेयं लतादोलाति णीयमिदं तीरतरुतलमिति स्निग्धमनोहरतरोद्देशदर्शनलोभाक्षि हृदया सह सखीजनेन व्यचरम् ।

अथैकस्मिंश्च प्रदेशे झटिति वनानिलेनोपनीतमनाघ्रातपूर्व मानुषलोकोचितं कुसुमगन्धमभ्यजिघ्रम् । कुतोऽयमित्युपारूढकु हला चाहं मुकुलितलोचना तेन कुसुमगन्धेन मधुकरीवाकृष्य माणा कौतुकतरलाभ्यधिकतरोपजातमणिनूपुरझंकाराकृष्टस कलहंसानि कतिचित्पदानि गत्वा हरनयनहुताशनेन्धनीकृतमद शोकविधुरवसन्तमिव तपस्यन्तं मौञ्जमेखलागुणेन परिक्षि जघनभागमलंकारमिव ब्रह्मचर्यस्य यौवनमिव धर्मस्य विला मिव सरस्वत्याः स्वयंवरपतिमिव सर्वविद्यानां संकेतस्थानमि सर्वश्रुतीनामात्मानुरूपेण सवयसापरेण देवतार्चनकुसुमान्युच्चिन्व तापसकुमारेणानुगतमतिमनोहरं स्नानार्थमागतं मुनिकुमार मपश्यम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तेन च कर्णावतंसीकृतां वसंतदर्शनानन्दितायाः स्मितप्रभामिव वनश्रियः कृत्तिकातारास्तबकानुकारिणीममृतबिन्दुनिस्यन्दिनीमदृष्टपूर्वां कुसुममञ्जरीमद्राक्षम् । अस्याः परिभूतान्यकुसुमामोदो नन्वयं परिमल इति मनसा निश्चित्य तं तपोधनयुवानमीक्षमाणाहमचिन्तयम् । अहो रूपातिशयनिष्पादनोपकरणकौशलस्याक्षीणता विधातुः । यत्त्रिभुवनाद्भुतरूपसंभारं भगवन्तं कुसुमायुधमुत्पाद्य तदाकारातिरिक्तरूपराशिरयमपरो मुनिमायामयो मकरकेतुरुत्पादितः । मन्ये च सकलजगन्नयनानन्दकरं शशिबिम्बं विरचयता प्रजापतिना प्रथममेतदाकारकरणकौशलाभ्यास एव कृतः । अन्यथा किमिव हि सदृशवस्तुविरचनायाः कारणम् । इति विचिन्तयन्तीमेव मामविचारितगुणदोषविशेषो रूपैकपक्षपाती नवयौवनसुलभः कुसुमायुधः कुसुमासवमद इव मधुकरीं परवशामकरोत् ।

विस्मृतनिमेषेण दक्षिणेन चक्षुषा सस्पृहमापिबन्तीव किमपि याचमानेव त्वदायत्तास्मीति वदन्तीवाभिमुखं हृदयमर्पयन्तीव सर्वात्मनानुप्रविशन्तीव तन्मयतामिव गन्तुमीहमाना मनोभवाभिभूतां त्रायस्वेति शरणमिवोपयान्ती देहि मे हृदयेऽवकाशमित्यर्थितामिव दर्शयन्ती हा हा किमिदमसांप्रतमतिह्रपणमकुलकुमारीजनोचितमिदं मया प्रस्तुतमिति जानानाप्यप्रभवन्ती करणानां स्तम्भितेव लिखितेवोत्कीर्णेव संयतेव विधृतेव मूर्छितेव निष्पन्दसकलावयवा तत्कालाविर्भूतेनावष्टम्भेनाकथितशिक्षितेनानाख्येयेन स्वयंवेद्येन केवलं न विभाव्यते किं तद्रूपसंपदा किं मनसा किं मनसिजेन किमभिनवयौवनेन किमनुरागेणैवोपदिश्यमाना किमन्येनैव वा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


केनापि प्रकारेणाहमपि न जानामि कथंकथमिति तमतिचिरं व्यलोकयम् । उत्क्षिप्य नीयमानेव तत्समीपमिन्द्रियैः पुरस्तादाकृष्यमाणेव हृदयेन पृष्ठतः प्रेर्यमाणेव पुष्पधन्वना कथमपि मुक्तप्रयत्नमात्मानमधारयम् ।

आसीच्च मम मनसि शान्तात्मनि दूरीकृतसुरतव्यतिकरेऽस्मिञ्जने मां निक्षिपता किमिदमनार्येणासदृशमारब्धं मनसिजेन। एवं च नामातिमूढं हृदयमङ्गनाजनस्य । यदनुरागविषययोग्यतामपि विचारयितुं नालम् । क्वेदमतिभास्वरं धाम तेजसां तापसां च । क्व च प्राकृतजनाभिनन्दितानि मन्मथपरिस्पन्दितानि । नियतमयं मामेवं मकरलाञ्छनेन विडम्ब्यमानामुपहसति मनसा । चित्रं चेदं यदहमेवमवगच्छन्त्यपि न शक्नोम्यात्मनो विकारमुपसंहर्तुम् । अन्या अपि कन्यकास्त्रपामपहाय स्वयमुपयाताः पतीन् । अन्या अप्यनेन दुर्विनीतेन मन्मथेनोन्मत्ततां नीता नार्यः । न पुनरहमेका यथा । कथमनेन क्षणेनाकारमात्रालोकनाकुलीभूतमेवमस्वतन्त्रतामुपैत्यन्तःकरणम् । कालोऽपि गुणाश्च दुर्निवारतामारोपयन्ति मदनस्य सर्वथा । यावदेव सचेतनास्मि यावदेव च न परिस्फुटमनेन विभाव्यते मे मदनदुश्चेष्टितलाघवमेतत्तावदेवास्मात्प्रदेशादपसरणं श्रेयः । कदाचिदनभिमतस्मरविकारदर्शनकुपितोऽयं शापाभिज्ञां करोति माम् । अदूरकोपा हि मुनिजनप्रकृतिः । इत्यवधार्यापसरणाभिलाषिण्यहमभवम् । अशेषजनपूजनीया चेयं जातिरिति कृत्वा तद्वदनाकृष्टदृष्टिप्रसरमस्मै प्रणाममकरवम् ।

अथ कृतप्रणामायां मयि दुर्लङ्घ्यशासनतया भगवतो मनोभुवो मदजननतया च मधुमासस्यातिरमणीयतया च तस्य प्रदे

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


शस्याविनयबहुलतया चाभिनवयौवनस्य चञ्चलप्रकृतितया चेन्द्रियाणां दुर्निवारतया च विषयाभिलाषाणां चपलतया च मनोवृत्तेस्तथाभवितव्यतया च तस्य तस्य वस्तुनः किं बहुना मम भाग्यदौरात्म्यादस्य चेदृशस्य क्लेशस्य विहितत्वात्तमपि मद्विकारदर्शनापहृतधैर्यं प्रदीपमिव पवनस्तरलतामनयदनङ्गः । तदा तस्याप्यभिनवागतं मदनं प्रत्युद्गच्छन्निव रोमोद्गमः प्रादुरभवत् । मत्सकाशमभिप्रस्थितस्य मनसो मार्गमिवोपदिशद्भिः पुरः प्रवृत्तं श्वासैः । वेपथुगृहीता व्रतभङ्गभीतेवाकंपत करतलगताक्षमाला । तया तु तस्यातिप्रकटया विकृत्या द्विगुणीकृतमदनावेशा तत्क्षणमहमवर्णनयोग्यां कामप्यवस्थामन्वभवम् । इदं च मनस्यकरवम् । मकरकेतुरेव विलसानुपदिशति । अन्यथा विविधरसासङ्गललितेष्वपीदृशेषु व्यतिकरेष्वप्रविष्टबुद्धेरस्य जनस्य कुत इवेयमनभ्यस्ताकृती रतिरसनिष्यन्दमिव क्षरन्त्यमृतमिव वर्षन्ती मदमुकुलितेव खेदालसेवं निद्राजडेवानन्दभरमंथरतरलतरसंचारिण्यानिभृतभ्रूलतालासिनी दृष्टिः । कुतश्चेदमतिनैपुण्यं यच्चक्षुषैवानक्षरमेवमन्तर्गतो हृदयाभिलाषः कथ्यते ।

प्राप्तप्रसरा चोपसृत्य तं द्वितीयमस्य सहचरं मुनिबालकं प्रणामपूर्वकमपृच्छम् । भगवन् किमभिधानः कस्य वायं तपोधनस्य युवा । किंनाम्नश्च तरोरियमनेनावतंसीकृता कुसुममञ्जरी । जनयति हि मे मनसि महत्कौतुकमस्याः समुत्सर्पन्नसाधारणसौरभोयमनाघ्रातपूर्वो गन्ध इति । स तु मामीषद्विहस्याब्रवीत् । बाले किमनेन पृष्टेन प्रयोजनम् । अथ कौतुकमावेदयामि । श्रूयताम् ।

अस्ति खलु सकलत्रिभुवनप्रख्यातकीर्तिरत्युदारतपाः सुरा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सुरसिद्धवृन्दवन्दितचरणयुगलो महामुनिर्दिव्यलोकनिवा श्वेतकेतुर्नाम । तस्य भगवतः सुरासुरलोकसुन्दरीहृदयानन्दक मशेषत्रिभुवनसुन्दरमतिशयितनलकूबरं रूपमासीत् । स क चिद्देवतार्चनकमलान्युद्धर्तुं मन्दाकिनीमवततार । अवतरन्तं तदा कमलवनेषु सततसंनिहिता विकचसहस्रपुण्डरीकोपवि देवी लक्ष्मीर्ददर्श । तस्यास्तु तमवलोकयन्त्या मन्मथविकृतं म आसीत् । आलोकनमात्रेण च समासादितसुरतसमागमसुखाया स्मिन्नेवासनीकृते पुण्डरीके कृतार्थताऽसीत् । तस्माच्च कुमा समुदपादि । ततस्तमुत्सङ्गेनादाय सा भगवन्गृहाण तवायमात्म इत्युक्त्वा तस्मै श्वेतकेतवे ददौ । असावपि बालजनोचिताः स क्रियाः कृत्वा तस्य पुण्डरीकसंभवतया तदेव पुण्डरीक इ नाम चक्रे । प्रतिपादितव्रतं तमागृहीतसकलविद्याकलापमकार्षीत् सोऽयम् ।

इयं च सुरासुरैर्मथ्यमानात्क्षीरसागरादुद्गतः पारिजातनाम पादपस्तस्य मञ्जरी । यथा चैषा व्रतविरुद्धमस्य श्रवणसंस मासादितवती तदपि कथयामि । अद्य चतुर्दशीति भगव मम्बिकापतिं कैलासगतमुपासितुममरलोकान्मया सह नन्दनव समीपेनायमनुसरान्निर्गत्य नन्दनवनदेवतया पारिजातकुसुममञ्ज मिमामादाय प्रणम्याभिहितः । भगवन्सकलत्रिभुवनदर्श भिरामायास्तवाकृतेरस्याः सुसदृशोऽयमलंकारः । इयं समारो प्यतां श्रवणशिखरम् । व्रजतु सफलतां जन्म पारिजातस्येति एवमभिदधानां चायमात्मरूपस्तुतिवादत्रपावनमितविलोचन स्तामनादृत्यैव गन्तुं प्रवृत्तः । मया तु तामनुयान्तीमालोक्य को दोषः सखे क्रियतामस्याः प्रणयपरिग्रह इत्यभिधा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आदियमनिच्छतोप्यस्य कर्णपूरीकृता । तदेतत्कार्त्स्न्येन ऽियं यस्य चायं या चेयं यथा चास्य श्रवणशिखरं समारूढा त्सर्वमावेदितम् ।

इत्युक्तवति तस्मिन्स तपोधनयुवा किंचिदुपदर्शितस्मितो मवादीत् । अयि कुतूहलिनि किमनेन प्रश्नायासेन । यदि चितसुरभिपरिमला गृह्यतामियम् । इत्युक्त्वा समुपसृत्यात्मीया- छ्रवणादपनीय मदीये श्रवणपुटे तामकरोत् । मम तु तत्करतल- र्शलोभेन तत्क्षणमपरमिव पारिजातकुसुमावतंसस्थाने पुलक- ासीत् । स च मत्कपोलस्पर्शसुखेन तरलीकृतांगुलिजालका- करतलादक्षमालां लज्जया सह गलितामपि नाज्ञासीत् । अथाहं ामसंप्राप्तामेव भूतलमक्षमालां गृहीत्वा सलीलं तद्भुजपाशसंदानित- ण्ठग्रहसुखमिवानुभवन्ती दर्शितापूर्वहारलतालीलां कण्ठाभरणता- नयम् ।

इत्थंभूते च व्यतिकरे छत्रग्राहिणी मामवोचत् । भर्तृदारिके नाता देवी । प्रत्यासीदति गृहगमनकालः । तत्क्रियतां मज्जन- वेधिरिति । अहं तु तेन तस्या वचनेन नवग्रहा करिणीव प्रथमा- ङ्कुशपातेनानिच्छयापि कथं कथमपि समाकृष्यमाणा तन्मुखा- द्दृष्टिमाकृष्य स्नातुमुदचलम् । उच्चलितायां च मयि द्वितीयो ुनिदारकस्तथाविधं तस्य धैर्यस्खलितमालोक्य किंचित्प्रकटित- णयकोप इवावादीत् ।

सखे पुण्डरीक नैतदनुरूपं भवतः क्षुद्रजनक्षुण्ण एष मार्गः । ैर्यधना हि साधवः । किं यःकश्चित्प्राकृत इव विक्लवीभवन्त- ात्मानं न रुणत्सि । कुतस्तवापूर्वोऽयमद्येन्द्रियोपप्लवो येनास्येवं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कृतः क ते तद्धैर्यम् । क्वासाविन्द्रियजयः । क तत्प्र चेतसः । क सा सर्वविषयनिरुत्सुकता । क ते गुरूपदेशाः । क्व श्रुतानि । क ता वैराग्यबुद्धयः । क तदुपभोगविद्वेषित्वम् । क सुखपराङ्मुखता । क्वासौ तपस्यभिनिवेशः । क सा संयमि सा भोगानामुपर्यरुचिः । क तद्यौवनानुशासनम् । सर्वथा नि प्रज्ञा । निर्गुणो धर्मशास्त्राभ्यासः । निरर्थकः संस्कारः । निरुप गुरूपदेशविवेकः । निष्प्रयोजना प्रबुद्धता । निष्कारणं ज्ञा यदत्र भवादृशा अपि रागाभिषङ्गैः कलुषीक्रियन्ते प्रमादैश्चाभि कथं करतलाद्गलितामपहृतामक्षमालामपि न लक्षयसि । विगतचेतनत्वम् । अपहृता नामेयम् । इदमपि तावदपहि मनयानार्यया निवार्यतां हृदयमिति ।

एवमभिधीयमानश्च तेन किंचिदुपजातलज्ज इव प्रत्यवा सखे कपिञ्जल किं मामन्यथा संभावयसि । नाहम दुर्विनीतकन्यकाया मर्षयाम्यक्षमालाग्रहणापराधमिमम् इत्यभिधायालीककोपकान्तेन प्रयत्नविरचितभीषणभ्रुकुटि चुम्बनाभिलाषस्फुरिताधरेण मुखेन्दुना मामवदत् । प्रदेशादस्मादिमामक्षमालामदत्वा पदात्पदमपि न गन्तव्य तच्च श्रुत्वाहमात्मकण्ठादुन्मुच्यैकावलीं भगवन्गृह्यतामक्ष मन्मुखासक्तदृष्टेः शून्यहृदयस्यास्य प्रसारितपाणौ । स्वेदसलिलस्नातापि पुनः स्नातुमवातरम् । उत्थाय च क प्रयत्नेन निम्नगेव प्रतीपं नीयमाना सखीजनेन बलादम्बया तमेव चिन्तयन्ती स्वभवनमयासिषम् । गत्वा च प्र कन्यान्तःपुरं ततःप्रभृति तद्विरहविधुरा किमागतास्मि किं स्थितास्मि किमेकाकिन्यस्मि किं परिवृत्तास्मि किं तूष्णी

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रस्तुतालापास्मि किं जागर्मि किं सुप्तास्मि किं रोदिमि किं रोदिमि किं दुःखमिदं किं सुखमिदं किमुत्कण्ठेयं किं व्याधिरयं व्यसनमिदं किमुत्सवोऽयं किं दिवस एष किं निशेयं कानि ाणि कान्यरम्याणीति सर्वं नावागच्छम् । अविज्ञातमदन- ान्ता च क गच्छामि किं करोमि किं शृणोमि किं पश्यामि ालपामि कस्य कथयामि कोऽस्य प्रतीकार इति सर्वं च ासिषम् । केवलमारुह्य कुमारीपुरप्रासादं विसर्ज्य च ीजनं द्वारि निवारिताशेषपरिजनप्रवेशा सर्वव्यापारानुत्सृज्यै- केनी मणिजालगवाक्षनिक्षिप्तमुखी तामेव दिशं तत्सनाथ- ा प्रसाधितामिव दर्शनसुभगामीक्षमाणा तस्माद्दिगन्तरा- च्छन्तमनिलमपि वनकुसुमपरिमलमपि शकुनिध्वनिमपि र्तां प्रष्टुमीहमाना तद्वल्लभतया तपःपरिक्लेशायापि स्पृहयन्ती ीत्येव गृहीतमौनव्रता स्मरजनितपक्षपाता तत्परिग्रहान्मुनि- स्याग्राम्यतां तदास्पदतया यौवनस्य चारुतां तच्छ्रवण- र्णात्पारिजातकुसुमस्य मनोहरतां तन्निवासात्सुरलोकस्य रतां तद्रूपसंपदा कुसुमायुधस्य दुर्जयतामध्यारोपयन्ती दूर- ापि कमलिनीव सवितुः सागरवेलेव चन्द्रमसो मयूरीव जल- स्य तस्यैवाभिमुखी तथैव तां तद्विरहातुरजीवितोद्गमरक्षावली- ाक्षावलीं कण्ठेनोद्वहन्ती तथैव च तया प्रस्तुततद्रहस्या- येव कर्णलग्नया पारिजातमञ्जर्या तथैव च तेन तत्करतलस्पर्श- जन्मना कदम्बमुकुलकर्णपूरायमाणेन रोमाञ्चजालेन कण्टकिते- पोलफलका निष्पन्दमतिष्ठम् ।

अथ ताम्बूलकरङ्कवाहिनी मदीया तरलिका नाम मयैव सह ा स्नातुमासीत् । सा च पश्चाच्चिरादिवागत्य तथावस्थितां



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


शनैर्मामवादीत् । भर्तृदारिके यौ तौ तापसकुमारकौ दिव्य वस्माभिरच्छोदसरस्तीरे दृष्टौ तयोरेको येन भर्तृदुहितुरियम् कृता सुरतरुकुसुममञ्जरी स तस्माद्द्वितीयादात्मनो रक्ष मतिनिभृतपदः कुसुमितलतासंतानगहनान्तरेणोपसृत्य च्छन्तीं पृष्ठतो भर्तृदारिकामुद्दिश्याप्राक्षीत् । बालिके कन्यका कस्य वापत्यं किमभिधाना क्व वा गच्छतीति । मेषा खलु भगवतः श्वेतभानोरंशुभूतायामप्सरसि गौर्यां स देवस्य गन्धर्वाधिपतेर्हंसस्य दुहिता महाश्वेता नाम धिवासं हेमकूटमचलवरमभिप्रस्थिता । इति कथिते च किमपि चिन्तयन्मुहूर्तमिव तूष्णीं स्थित्वा विगतनिमेषेण चिरमिवाभिवीक्षमाणो मां सानुनयमर्थितामिव दर्शयन्पुन बालिके कल्याणिनि तवाविसंवादिन्यचपला बालभावेऽप्य रियम् । तत्करोषि मे वचनमेकमभ्यर्थ्यमानेति । ततो सविनयमुपरचिताञ्जलिपुटया दर्शितादरमभिहितः । न्कस्मादेवमभिधत्से । काहम् । महात्मानः सकलत्रिभुवनपू स्त्वादृशाः पुण्यैर्विना निखिलकल्मषापहारिणीमस्मद्विधेषु मपि न पातयन्ति किं पुनराज्ञाम् । तद्विश्रब्धमादिश्यतां कर्त अनुगृह्यतामयं जन इति । एवमुक्तश्च मया सस्नेहया सखी कारिणीमिव प्राणप्रदामिव दृष्ट्वा मामभिनन्द्य निकट स्तमालपादपात्पल्लवमादाय निष्पीड्य शिलातले तेन गन्धग सुरभिपरिमलेन रसेनोत्तरीयवल्कलैकदेशाद्विपाट्य स्वहस्तकमलकनिष्ठिकानखशिखरेणाभिलिख्येयं पत्रिका त्वया कन्यकायै प्रच्छन्नमेकाकिन्यै देयेत्यभिधायार्पितवान् । तत च सा ताम्बूलभाजनादाकृष्य तामदर्शयत् । अहं तु तेन

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


धेनालापेन शब्दमयेनापि स्पर्शसुखमिवान्तर्जनयता श्रोत्रविषयेणापि रोमोद्गमानुमितसर्वाङ्गानुप्रवेशेन मदनावेशमन्त्रेणेवावेश्यमाना तस्याः करतलादादाय तां वल्कलपट्टिकां तस्यामिमाममभिलिखितामार्यामपश्यम् ।

दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥

अनया च मे दृष्ट्या दोषविकारोपचयः सुतरामक्रियत स्मरानुरक्तस्य मे मनसः । येनाकुलीक्रियमाणा सरिदिव पूरेण विह्वलतामभ्यागमम् । तां च द्वितीयदर्शनेन कृतमहापुण्यामिव मन्यमाना सततसंनिहितामपि दुर्लभदर्शनामिवातिपरिचितामप्यपूर्वामिव सादरमाभाषमाणा पार्श्वस्थामपि सर्वलोकस्योपर्यवस्थितामिव पश्यन्ती कपोलयोरलकलताभङ्गेषु च सोपग्रहं स्पृशन्ती विपरीतमिव परिजनस्वामिसंबन्धमुपदर्शयन्ती तरलिके कथय कथं स त्वया दृष्टः किं किमभिहितासि तेन कियन्तं कालमवस्थितासि तत्र कियदनुसरन्नस्मानसावागत इति पुनः पुनः पर्यपृच्छम् । अनयैव च कथया तया सह तस्मिन्नेव प्रासादे तथैव प्रतिषिद्धाशेषपरिजनप्रवेशा दिवसमत्यवाहयम् ।

अथास्तं गते भगवति रवौ सा छत्रग्राहिणी समागत्याकथयत् । भर्तृदारिके तयोर्मुनिकुमारयोरन्यतरो द्वारि तिष्ठति कथयति चाक्षमालामुपयाचितुमागतोऽस्मीति । अहं तु मुनिकुमारनामग्रहणादेव स्थानस्थितापि गतेव द्वारदेशं समुपजाततदागमनाशङ्का समाहूयान्यतमं कञ्चुकिनं गच्छ प्रवेश्यतामित्यादिश्य प्राहिणवम् । अथ मुहूर्तादिव तं तस्य सखायमृषिकुमारं कपिञ्जलनामानं जराधवलितस्य कञ्चुकिनोऽनुमार्गेणागच्छन्तमप-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


श्यम् । अन्तिकमुपगतस्य चास्य पर्याकुलमिव सविषा... शून्यमिवार्थिनमिवान्तर्गताकूतमाकारमलक्षयम् । उत्थाय कृतप्रणामा सादरं स्वयमासनमुपाहरम् । उपविष्टस्य च ... दनिच्छतोऽपि प्रक्षाल्य चरणावपमृज्य चोत्तरीयांशुकपल्लवेना... धानायां भूमावेव तस्यान्तिके समुपाविशम् । अथ मुहूर्तं स्थित्वा किमपि विवक्षुरिव स तस्यां मत्समीपोपविष्टायां ... लिकायां चक्षुरपातयत् । अहं तु विदिताभिप्राया दृष्ट्वैव ... न्नव्यतिरिक्तेयमस्मच्छरीरादशङ्कितमभिधीयतामित्यवोचम् । ...

एवमुक्तस्तु मया कपिञ्जलः प्रत्यवादीत् । राजपुत्रि ... ब्रवीमि । वागेव मे नाभिधेयविषयमवतरति त्रपया । क ... मूलफलाशी शान्तो वनवासनिरतो मुनिजनः क वायमशा... जनोचितो विषयोपभोगाभिलाषकलुषो मन्मथविविधवि... संकटो रागप्रायः प्रपञ्चः । सर्वमेवानुपपन्नमालोक्य किमा... दैवेन । अयत्नेनैव खलूपहासास्पदतामीश्वरो नयति जनम् । न जाने किमिदं वल्कलानां सदृशमुताहो जटानां समुचितम् किं तपसोऽनुरूपमाहोस्विद्धर्मकर्मोपदेशाङ्गमिदम् । अपूर्वेयं विड... केवलमवश्यकथनीयमिदम् । अपर उपायो न दृश्यते । ... प्रतिक्रिया नोपलभ्यते । अन्यच्छरणं नालोक्यते । अन्या गतिर्ना... अकथ्यमाने च महाननर्थोपनिपातो जायते । प्राणपरित्यागे... रक्षणीयाः सुहृदसव इति कथयामि । अस्ति भवत्याः सम... मेव स मया तथा निष्ठुरमुपदर्शितकोपेनाभिहितः । तथा चाभि... परित्यज्य तं तस्मात्प्रदेशादुपजातमन्युरुत्सृष्टकुसुमावचयो... प्रदेशमगमम् । ...यातायां भवत्यां मुहूर्तमिव स्थित्वैका... किमयमिदानीमाचरतीति संजातवितर्कः प्रतिनिवृत्य विटपान्तरि...

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विग्रहस्तं प्रदेशं व्यलोकयम् । यावत्तत्र तं नाद्राक्षमासीच्च मे मनस्येवं किं नु मदनपरायत्तचित्तवृत्तिस्तामेवानुसरन्गतो भवेत् । गतायां च तस्यां लब्धचेतनो लज्जया न शक्नोति मे दर्शनपथमुपगन्तुमाहोस्वित्कुपितः परित्यज्य मां गतः । उतान्वेषमाणो मामेव प्रदेशमन्यमितः समाश्रितः स्यादित्येवं विकल्पयन्कंचित्कालमतिष्ठम् । तेन तु जन्मनः प्रभृत्यनभ्यस्तेन तस्य क्षणमप्यदर्शनेन दूयमानः पुनरचिन्तयम् । स कदाचिद्धैर्यस्खलनविलक्षः किंचिदनिष्टमपि समाचरेत् । न हि किंचिन्न क्रियते ह्रिया । तन्न युक्तमेनमेकाकिनं कर्तुम् । इत्यवधार्यान्वेष्टुमादरमकरवम् । अन्वेषमाणश्च यथा यथा नापश्यं तं तथा तथा सुहृत्स्नेहकातरेण मनसा तत्तदशोभनमाशङ्कमानस्तरुलतागहनानि चन्दनवीथिका लतामण्डपान्सरःकूलानि च वीक्षमाणो निपुणमितस्ततो दत्तदृष्टिः सुचिरं व्यचरम् ।

अथैकस्मिँल्लतागहने कृतावस्थानमुत्सृष्टसकलव्यापारतया लिखितमिवोत्कीर्णमिव स्तम्भितमिवोपरतमिव प्रसुप्तमिव योगसमाधिस्थमिव मदनमयमिव परायत्तचित्तवृत्तिं परां कोटिमधिरूढं मन्मथावेशस्यानभिज्ञेयपूर्वाकारं तमहमद्राक्षम् ।

अपगतनिमेषेण चक्षुषा तदवस्थं चिरमुद्वीक्ष्य समुपजातविषादो वेपमानेन हृदयेनाचिन्तयम् । एवं नामायमतिदुर्विषहवेगो मकरकेतुर्येनानेन क्षणेनायमीदृशमवस्थान्तरमप्रतीकारमुपनीतः । कथमेवमेकपदे व्यर्थीभवेदेवंविधो ज्ञानराशिः । अहो बत महच्चित्रम् । तथा नामायमाशैशवाद्धीरप्रकृतिरस्खलितवृत्तिर्मम चान्येषां च मुनिकुमारकाणां स्पृहणीयचरित आसीत् । अद्य त्वितर इव परिभूय ज्ञानमविगणय्य तपःप्रभावमुन्मूल्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


गाम्भीर्यं मन्मथेन जडीकृतः । सर्वथा दुर्लभं यौवनमस्खलितमि उपसृत्य च तस्मिन्नेव शिलातलैकपार्श्वे समुपविश्यांसदेशावस पाणिंस्तमनुन्मीलितलोचनमेव सखे पुण्डरीक कथय किमिद त्यपृच्छम् । अथ सुचिरसंमीलनाल्लग्नमिव कथमपि प्रय नानवरतरोदनवशादुपजातारुणभावमश्रुजलपूरप्लावितमुत्कुपितमिव नि स्वच्छांशुकान्तरितरक्तकमलवनच्छायं चक्षुरुन्मील्य मन्थर दृष्ट्या सुचिरं विलोक्य मामायततरं निश्वस्य लज्जाविशीर्यमा विरलाक्षरं सखे कपिञ्जल विदितवृत्तान्तोऽपि किं मां पृच्छसि अ कृच्छ्रेण शनैरवदत् । अहं तदाकर्ण्य तदवस्थयैवाप्रतीकारविकार न यं तथापि सुहृदा सुहृदसन्मार्गप्रवृत्तो यावच्छक्तितः सर्वात्मना निवारणीय इति मनसावधार्याब्रवम् । यो

सखे पुण्डरीक सुविदितमेतन्मम । केवलमिदमेव पृच्छामि म यदेतदारब्धं भवता किमिदं गुरुभिरुपदिष्टम् । उत धर्मशास्त्र पठितम् । उत धर्मार्जनोपायोऽयम् । उतापरस्तपसां प्रकारः उत स्वर्गगमनमार्गोऽयम् । उत व्रतरहस्यमिदम् । उत मोक्षप्राप्ति युक्तिः । आहोस्विदन्यो नियमप्रकारः । कथमेतद्युक्तं भव मनसापि चिन्तयितुं किं पुनराख्यातुमीक्षितुं वा । कथय किमप्रबु इवानेन मन्मथहतकेनोपहासास्पदतां नीयमानमात्मा नावबुध्यसे । मूढो मदनेनायास्यते । का वा सुखाशा साधुज निन्दितेष्वेवंविधेषु विषयेषु भवतः । स खलु धर्मबुद्ध्या विषलता वनं सिञ्चति । कुवलयमालेति निस्त्रिंशलतामालिङ्गति । कृष्ण गुरुधूमलेखेति कृष्णसर्पमवगूहते । महारत्नमिति ज्वलन्तमङ्गार मभिस्पृशति । मृणालमिति दुष्टवारणदन्तमुसलमुन्मूलयति स मूढो विषयोपभोगेष्वनिष्टानुबन्धिषु यः परिणतिविरसेषु सु

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



बुद्धिमारोपयति । अधिगतविषयतत्त्वोपि कस्मात्खद्योत इव ज्योतिर्निर्वीर्यमिदं ज्ञानमुद्वहसि । यतो न निवारयसि प्रबलरजः-प्रसरकलुषितानि स्रोतांसीवोन्मार्गप्रस्थितानीन्द्रियाणि न नियम-यसि वा क्षुभितं मनः । कोऽयमनङ्गो नाम । धैर्यमवलम्ब्य निर्भर्त्स्यतामयं दुराचार इति । एवं वदत एव मे वचनमाक्षिप्य प्रतिपक्ष्मान्तरालप्रवृत्तबाष्पवेणिकं प्रमृज्य चक्षुः करतलेन पाणौ मामवलम्ब्यावोचत् । सखे किं बहुनोक्तेन सर्वथा सुस्थोऽसि । आशीविषविषवेगविषमाणामेतेषां कुसुमचापसायकानां पतितोऽसि न गोचरे । सुखमुपदिश्यते परस्य । यस्य चेन्द्रियाणि सन्ति मनो वा विद्यते यः पश्यति वा शृणोति वा श्रुतमवधारयति वा यो वा शुभमिदं न शुभमिदमिति विवेक्तुमलं स खलूपदेशमर्हति । मम तु सर्वमेवेदमतिदूरापेतम् । अवष्टम्भो ज्ञानं धैर्यं प्रतिसंख्यानमित्यस्तमितैषा कथा । कथमप्येवमेवायत्नविधृता-स्तिष्ठन्त्यसवः । दूरातीतः खलूपदेशकालः समतिक्रान्तो धैर्या-वसरः । गता प्रतिसंख्यानवेला । अतीतो ज्ञानावष्टम्भसमयः । केन वान्येनास्मिन्समये भवन्तमपहायोपदेष्टव्यमुन्मार्गप्रवृत्ति-निवारणं वा करणीयम् । कस्यान्यस्य वा वचसि मया स्थातव्यम् । को वापरस्त्वत्समो मे जगति बन्धुः । किं करोमि । यन्न शक्नोमि निवारयितुमात्मानम् । इयमनेनैव क्षणेन भवता दृष्टा-वस्था । तद्गत इदानीमुपदेशकालः । यावत्प्राणिमि तावदस्य कल्पान्तोदितद्वादशादिनकरकिरणातपतीव्रस्य मदनसंतापस्य प्रति-क्रियां क्रियमाणामिच्छामि । पच्यन्त इव मेऽङ्गानि । उत्क्वथ्यत इव हृदयम् । प्लुष्यत इव दृष्टिः । ज्वलतीव शरीरम् । अत्र यत्प्राप्तकालं तत्करोतु भवान् । इत्यभिधाय तूष्णीमभवत् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


एवमुक्तोऽप्यहमेनं प्राबोधयं पुनः पुनः। यदा शास्त्रोपदेशविशे सनिदर्शनैः सेतिहासैश्च वचोभिः सानुनयं सोपग्रहं चाभिधी मानोऽपि नाकरोत्कर्णे तदाहमचिन्तयम् । अतिभूमिमियं ग नं शक्यते निवर्तयितुम् । इदानीं निरर्थकाः खलूपदेशाः । तत्प्रा परिरक्षणेऽपि तावदस्य यत्नमाचरामीति कृतमतिरुत्थाय ग तस्मात्सरसः सरसा मृणालिकाः समुद्धृत्य कमलिनीपलाशा जललवलाञ्छितानि चादाय तस्मिन्नेव लतागृहशिला शयनमस्याकल्पयम् । तत्र च सुखनिषण्णस्य प्रत्यास वर्तिनां चन्दनविटपिनां मृदूनि किसलयानि निष्पीड्य स्वभावसुरभिणा तुषारशिशिरेण रसेन ललाटिकामकल्पयम् आचरणतलादङ्गचर्चां चारचयम् । अभ्यर्णपादपस्फुटितवल्क विवरशीर्णेन च करसंचूर्णितेन कर्पूररेणुना स्वेदप्रतीकारम स्वम् । उरोनिहितचन्दनद्रवार्द्रवल्कलस्य स्वच्छसलिलसी स्राविणा कदलीदलेन व्यजनक्रियामन्वातिष्ठम् । एवं च मुहु रन्यदन्यन्नलिनीदलशयनमुपकल्पयतो मुहुश्चन्दनचर्चामारच मुहुर्मुहुश्च स्वेदप्रतिक्रियां कुर्वतः कदलीदलेन चान वीजयतः समुदभून्मे मनसि चिन्ता । नास्ति खल्वसाध्यं भगवतो मनोभुवः । क्वायं हरिण इव वनवासनिरतः स्व मुग्धो जनः । क्व च विविधविलासरसराशिर्गन्धर्वराज महाश्वेता । सर्वथा न हि किंचिदस्य दुर्घटं दुष्करमनायत्तम र्तव्यं वा जगति । दुरुपपादेष्वप्यर्थेष्वयमवज्ञया विचरति चायं केनापि प्रतिकूलयितुं शक्यते । का वा गणना सचेतने अपगतचेतनान्यपि संघट्टयितुमलं यद्यस्मै रोचते । कुमुदि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिनकरकरानुरागिणी भवति । कमलिन्यपि शशिकरद्वेषमुज्झति । निशापि वासरेण सह मिश्रतामेति । ज्योत्स्नाप्यन्धकारमनुवर्तते । जरापि यौवनेन संचारिणी भवति । किं वा तस्य दुःसाध्यमपरम् । एवंविधो येनायमगाधगाम्भीर्यसागरस्तृणलवलघुतामुपनीतः । क्व तत्तपः । क्वेयमवस्था । सर्वथा निष्प्रतिकारेयमापदुपस्थिता । किमिदानीं कर्तव्यम् । किमाचेष्टितव्यम् । कां दिशं गन्तव्यम् । किं शरणम् । कश्चोपायः । कः सहायः । कः प्रकारः । का युक्तिः । कः समाश्रयः । येनास्यासवः संधार्यन्ते । केन वा कौशलेन कतमया वा युक्त्या कतरेण वा प्रकारेण केन वावष्टम्भेन कया वा प्रज्ञया कतमेन वा समाश्वासनेनायं जीवेदिति । एते चान्ये च मे विषण्णहृदयस्य संकल्पाः प्रादुरासन् । पुनश्चाचिन्तयम् । किमनयात्यन्तायतया निष्प्रयोजनया चिन्तया । प्राणास्तावदस्य येन केनचिदुपायेन शुभेनाशुभेन वा रक्षणीयाः । तेषां च त्वत्समागममेकमपहाय नास्त्यपरः संरक्षणोपायः । बालभावादप्रगल्भतया च तपोविरुद्धमनुचितमुपहासमिवात्मनो मदनव्यतिकरं मन्यमानो नियतमेकोच्छ्वासावशेषजीवितोऽपि नायं तस्याः स्वयमभिगमनेन पूरयति मनोरथम् । अकालान्तरक्षमश्चायमस्य मदनविकारः । सततमतिगर्हितेनाकृत्येनापि परिरक्षणीयान्मन्यन्ते सुहृदसून्साधवः । तदतिह्रेपणमकर्तव्यमप्येतदस्माकमवश्यकर्तव्यतामापतितम् । किं चान्यत्क्रियते । का चान्या गतिः । सर्वथा प्रयामि तस्याः सकाशम् । आवेदयाम्येतामवस्थाम् । इति चिन्तयित्वा कदाचिदनुचितव्यापारप्रवृत्तं मां विज्ञाय संजातलज्जो निवारयेदित्यनिवेद्यैव तस्मै तस्मात्प्रदेशात्सव्याजमुत्थाया-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


गतोऽहम् । तदेवमवस्थिते यदत्रावसरप्राप्तमीदृशस्य चानुराग सदृशमस्मदागमनस्य चानुरूपमात्मनो वा समुचितं तत्र प्रभ भवती । इत्यभिधाय किमियं वक्ष्यतीति मन्मुखासक्तदृष्टिस्तूष्णी मासीत् ।

अहं तु तदाकर्ण्य सुखामृतमये ह्रद इव निमग्ना तत्काले जातया लज्जया किंचिदवनम्यमानवदनत्वादस्पृष्टकपोलोदरैरान बाष्पजलबिन्दुभिरावेद्यमानप्रहर्षप्रसरा तत्क्षणमचिन्तयम् । दिष्ट्या तावदयमनङ्गो मामिव तमप्यनुबध्नाति । यत्सत्यमनेन मे संताप ताप्यंशेन दर्शितानुकूलता । यदि च सत्यमेव तस्येदृशी दशा कृत किमिव नोपकृतमनेन किं वा नोपपादितम् । को वानेनानु समानो बन्धुः । कथं वा कपिञ्जलस्य स्वप्नेऽपि वितथा भा प्रशान्ताकृतेरस्माद्वदनान्निष्क्रामति । इत्थंभूते किं मयापि प्र पत्तव्यम् । तस्य वा पुरः किमभिधातव्यमिति । एवं वि यन्त्या एव प्रविश्य ससंभ्रमा प्रतीहारी मामकथयत् । दारिके त्वमसुस्थशरीरेति परिजनादुपलभ्य महादेवी प्राप्ता तच्च श्रुत्वा कपिञ्जलो महाजनसंमर्दभीरुः सत्वरमुत्थाय पुत्रि महानयमुपस्थितः कालातिपातो भगवांश्च भुवनत्रयचूडाम रस्तमुपगच्छति दिवसकरस्तद्गच्छामि सर्वथाभिमतसुहृत् रक्षादक्षिणार्थमयमुपरचितोऽञ्जलिरेष मे परमो विभव इत्य धाय प्रतिवचनकालमप्रतीक्ष्यैव पुरोयायिनाम्बायाः प्रवि प्रतीहारीजनेन सर्वतः संरुद्धे द्वारदेशे कथमप्यवाप्तनिर्गमः प्रय अम्बा तु मत्समीपमागत्य सुचिरं स्थित्वा स्वभवनमया तया तु तत्रागत्य किं कृतं किमभिहितं किमाचेष्टितमिति शून्यहृ सर्वं नालक्षयम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


गतायां च तस्यामस्तमुपगते भगवति हारीतहरितवाजिनि सवितरि तिमिरेणावष्टभ्यमाने जीवलोके किंकर्तव्यतामूढा तामेव तरलिकामपृच्छम् । अयि तरलिके कथं न पश्यसि दृढ-आकुलं मे हृदयमप्रतिपत्तिविह्वलानि चेन्द्रियाणि । न स्वयमण्वपि कर्तव्यमलमस्मि ज्ञातुम् । उपदिशतु मे भवती यदत्र सांप्रतम् । अयमेवं त्वत्समक्षमेवाभिधाय गतः कपिञ्जलः । यदि तावदितर-कन्यकेव विहाय लज्जामुत्सृज्य धैर्यमुन्मुच्य विनयमचिन्तयित्वा जनापवादमतिक्रम्य सदाचारमुल्लङ्घ्य शीलमवगणय्य कुलमङ्गी-कृत्यायशो रागान्धवृत्तिरननुज्ञाता पित्राननुमोदिता मात्रा स्वय-मुपगम्य ग्राहयामि पाणिमेवं गुरुजनातिक्रमादधर्मो महान् । अथ धर्मानुरोधादितरपक्षावलम्बनद्वारेण मृत्युमङ्गीकरोम्येवमपि प्रथमं तावत्स्वयमागतस्य प्रथमप्रणयिनस्तत्रभवतः कपिञ्जलस्य प्रणय-प्रसरभङ्गः । पुनरपरं यदि कदाचित्तस्य जनस्य मत्कृतादाशा-भङ्गात्प्राणविपत्तिरुपजायते तदपि मुनिजनवधजनितं महदेनो भवेदिति । एवमुच्चारयन्त्यामेव मय्यासन्नचन्द्रोदयजन्मना विरल-विरलेनालोकेन वसन्तवनराजिरिव कुसुमरजसा धूसरतां वासवी दिगयासीत् ।

अथ रजनीकरमुदितं विलोक्यान्तर्जनितमदनानलाप्यन्ध-कारितहृदया तत्क्षणमचिन्तयम् । एकत्र खलु मदनमधुमासमलय-मारुतप्रभृतयः समस्ताः । एकत्र चायं पापकारी चन्द्रहतको न शक्यते सोढुम् । इदमतिदुर्विषहमदनवेदनातुरं च मे हृदयम् । इत्येवं विचिन्तयन्तीमेव चन्द्रोदयोपनीता कमलवनम्लानिनिद्रेव मूर्च्छा मां निमीलितलोचनामकार्षीत् । अचिरेण च संभ्रान्त-तरलिकोपनीताभिश्चन्दनचर्चाभिस्तालवृन्तानिलैश्चोपलब्धसंज्ञा ता-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मेव रुदन्तीं तरलिकामपश्यम् । उन्मीलितलोचनां च मां कृतपादप्रणामा चन्दनपङ्कार्द्रेण करयुगलेन बद्धाञ्जलिरवा भर्तृदारिके किं लज्जया गुरुजनापेक्षया वा प्रेषय माम् । आनयामि ते हृदयदयितं जनम् । उत्ति स्वयं वा तत्र गम्यताम् । अतःपरमसमर्थासि सोढुं म मकरचिन्हम् । इत्येवंवादिनीं तामहमवोचम् । उन्मत्ते मन्मथेन । नन्वयमागत एव मृत्योस्तस्यैव वा सकाशं स्त कुमुदबान्धवः । तदुत्तिष्ठ यथा कथंचिदनुद्धतजीविता संभाव हृदयदयितमायासकारिणं जनम् । इत्यभिदधाना मूर्च्छाखेदविह्वलैरङ्गैः कथंचिदवलम्ब्य तामेवोदातिष्ठम् ।

उच्चलितायाश्च मे दुर्निमित्तनिवेदकमस्पन्दत दक्षिणं नम् । उपजातशङ्का चाचिन्तयम् । इदमपरं किमप्युप दैवेनेति । अथ नातिदूरोदितेन चन्द्रमण्डलेनाप्लाव्य ज्योत्स्नया भुवनान्तराले तया कण्ठस्थिताक्षमालया श्रवणशि चुम्बिन्या च पारिजातमञ्जर्या रक्तांशुकेन कृतशिरोवगु केनचिदात्मीयेनापि परिजनेनानुपलक्ष्यमाणा तस्मात्प्रासादशि दवातरम् ।

अवतीर्य च पारिजातकुसुममंजरीपरिमलाकृष्टेन कृतोपवनेन मधुकरजालेनानुबध्यमाना प्रमदवनपक्षद्वा निर्गत्य तत्समीपमुदचलम् । प्रयान्ती च तरलिकाद्वितीय जनमात्मानमालोक्याचिन्तयम् । प्रियतमाभिसरणप्रवृत्त जनस्य किमिव कृत्यं बाह्येन परिजनेन । नन्वेत एव परि लीलामुपदर्शयन्ति । तथाहि समारोपितशरासनासक्तसायक नुसरति कुसुमायुधः । दूरप्रसारितकरः करमिव कर्षति श

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


खलनभयात्पदे पदेऽवलम्बते रागः । लज्जां पृष्ठतः कृत्वा सहेन्द्रियैर्धावति हृदयम् । निश्चयमारोप्य नयत्युत्कण्ठेति । राङ्कावदम् । अयि तरलिके अपि नाम मामिवायमिन्दुहतकमपि किरणकचग्रहाकृष्टमभिमुखमानयेत् । इत्येवंवादिनीं मामसौ विहस्याब्रवीत् । भर्तृदारिके मुग्धासि । किमस्य न जनेन । अयमात्मनैव तावन्मदनातुर इव भर्तृदारिकायां स्ताश्चेष्टाः करोति । एतैश्चान्यैश्च तत्कालोचितैरालापैस्तया ह तमुद्देशमभ्युपागमम् । तत्र च मार्गलताकुसुमरजोधूसरं रणयुगलं कैलासतटाचन्द्रोदयस्रुतचन्द्रकान्तमणिप्रस्रवणे क्षालयन्ती यस्मिन्प्रदेशे स आस्ते तस्मिन्नेव चास्य सरसः श्चिमे तटे पुरुषस्येव रुदितध्वनिं विप्रकर्षान्नातिव्यक्तमुपालक्षम् । दक्षिणेक्षणस्फुरणेन च प्रथममेव मनस्याहितशङ्का तेन तरामवदीर्णहृदयेन किमप्यनिष्टमन्तः कथयतेव विषण्णेनान्तत्मना तरलिके किमिदमिति सभयमभिदधाना वेपमानगात्रयष्टिदाभिमुखमतित्वरितमगच्छम् ।

अथ निशीथप्रभावाद्दूरादेव विभाव्यमानस्वरमुन्मुक्तार्तनादं हतोऽस्मि हा दग्धोऽस्मि हा वञ्चितोऽस्मि हा किमिदमापतितं वृत्तमुत्सन्नोऽस्मि । दुरात्मन्मदनपिशाच पाप निर्घृण किमिदकृत्यमनुष्ठितम् । आः पापे दुष्कृतकारिणि दुर्विनीते महाश्वेते मनेन तेऽपकृतम् । आः पाप दुश्चरित चन्द्रचाण्डाल कृतार्थोऽदानीम् । अपगतदाक्षिण्य दक्षिणानिलहतक पूर्णास्ते मनोथाः । कृतं कर्तव्यम् । वहेदानीं यथेष्टम् । हा भगवञ्श्वेतकेतो त्रवत्सल न वेत्सि मुषितमात्मानम् । हा धर्म निष्परिग्रहोऽसि । तपो निराश्रयमसि । हा सरस्वति विधवासि । हा सत्यानाथ-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मसि। हा सुरलोक शून्योऽसि । सखे प्रतिपाल्य माम् । भवन्तमनुयास्यामि । न शक्नोमि भवता विना क्षणमप्य मेकाकी । कथमपरिचित इवादृष्टपूर्व इवाद्य मामेकपद प्रयासि । कुतस्तवेयमतिनिष्ठुरता । कथय त्वद्दते क्व गच्छ शून्या मे दिशो जाताः । तदुत्तिष्ठ देहि मे विलपतः प्रतिव क्व तन्ममोपरि सुहृत्प्रेम । क्व सा स्मितपूर्वाभिभाषिता च । तानि चान्यानि च विलपन्तं कपिञ्जलमश्रौषम् ।

तं च श्रुत्वा पतितैरिव प्राणैर्दूरादेव मुक्तैकताराक्रन्दा स्तीरलतासक्तित्रुट्यमानांशुकोत्तरीया यथाशक्ति त्वरितै समविषमभूमिभागविन्यस्तैः पादप्रक्षेपैः प्रस्खलन्ती पदे केनाप्युत्क्षिप्य नीयमानेव तं प्रदेशं गत्वा सरस्तीरसमीप शिशिरशीकरासारस्राविणि शशिमणिशिलातले विरचितं मधिशयानं कपिञ्जलेन मद्दर्शनादब्रह्मण्यमित्यूर्ध्वहस्तेन भूतबाष्पोद्गमेनाक्रोशता कण्ठे परिष्वक्तं तत्क्षणविगतजीवितं पापकारिणी मन्दभाग्या महाभागमद्राक्षम् ।

उद्भूतमूर्च्छान्धकारा च पातालतलमिवावतीर्णा तदा गमं किमकरवं किं व्यलपमिति सर्वमेव नाज्ञासिषम् । अस तस्मिन्क्षणे केन हेतुना नोद्गच्छन्ति स्म तदपि न ज्ञात केवलमतिचिराल्लब्धचेतना दुःखभागिनी वन्हाविव पतित शोकदह्यमानमात्मानमवनौ विचेष्टमानमपश्यम् । धाना चासंभवनीयं तत्तस्य मरणमात्मनश्च जीवितमुत्थाय हा किमिदमुपनतमिति मुक्तार्तनादा हा अम्ब हा तात सख्य इति व्याहरन्ती हा नाथ जीवितनिबन्धनाचक्ष्व मामेकाकिनीमशरणामकरुण विमुच्य यासि । पृच्छ तर

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


त्वत्कृते मया यानुभूतावस्था । युगसहस्रायमाणः कृच्छ्रेण नीतो दिवसः । प्रसीद सकृदप्यालप दर्शय भक्तवत्सलताम् । ईषदपि त्रैलोक्य । पूरय मे मनोरथम् । आर्तास्मि । भक्तास्मि । अनुरक्तास्मि । अनाथास्मि । बालास्मि । अगतिकास्मि । दुःखितास्मि । अनन्यशरणास्मि । मदनपरिभूतास्मि । किमिति न करोषि दयाम् । कथय किमपराद्धं किं वा नानुष्ठितं मया । कस्यां वा नाज्ञायामादृतम् । कस्मिन्वा त्वदनुकूले नाभिरतम् येन कुपितः । दासीजनमकारणात्परित्यज्य व्रजन्न बिभेषि कौलीनात् । अलीकानुरागप्रतारणकुशलया किं वा मया वामया दुरापया याहमद्यापि प्राणिमि । हा हतास्मि मन्दभागिनी । कथं सर्वं न त्वं न तातो न विनयो न बन्धुवर्गो न परलोकः । धिङ्मां दुष्कृतकारिणीं यस्याः कृते तवेयमीदृशी दशा वर्तते । नास्ति मत्सदृशी नृशंसहृदया याहमेवंविधं भवन्तमुत्सृज्य गृहं गतवती । किं मे गृहेण । किमम्बया । किं वा तातेन । किं बन्धुभिः । किं परिजनेन । हा कमुपयामि शरणम् । अयि दैव निर्घृण दर्शय दयाम् । विज्ञापयामि त्वाम् । देहि दयितदक्षिणाम् । भगवति भवितव्यते कुरु कृपाम् । पाहि वनितामनाथाम् । भगवत्यो वनदेवताः प्रसीदत प्रयच्छतास्य प्राणान् । अम्ब वसुंधरे सकललोकानुग्रहजननि किमर्थं नानुकम्पसे । तात कैलासेश शरणं गतास्मि ते । दर्शय दयालुताम् । इत्येतानि अन्यानि च व्याक्रोशन्ती कियद्वा स्मरामि । ग्रहगृहीतेवाविष्टेवोन्मत्तेव भूतोपहतेव व्यलपम् । तज्जीवितायैवात्ममरणाय स्पृहयन्ती मृतस्यापि सर्वात्मना हृदयं प्रवेष्टुमिवेच्छन्ती करतलेन कपोलयोराश्यानचन्दनश्वेतजटामूले च ललाटे निहितसरसबिसयो-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्वांसयोर्मलयजरसलवलुलितकमलिनीपलाशावगुण्ठिते च
परामृशन्ती पुण्डरीक निष्ठुरोऽस्येवमप्यार्तां न गणयसि
मित्युपालभमाना मुहुर्मुहुरेनमन्वनयम् । मुहुः पर्यचुम्बम्
कण्ठे गृहीत्वा व्याक्रोशम् । आः पापे त्वयापि मत्प्रत्यागम
यावदस्यासवो न रक्षिता इति तामेकावलीमगर्हयम् ।
भगवन्प्रसीद प्रत्युज्जीवयैनमिति मुहुर्मुहुः कपिञ्जलस्य
रपतम् । मुहुश्च तरलिकां कण्ठे गृहीत्वा प्रारुदम् ।
चिन्तयन्ती न जानामि तस्मिन्काले कुतस्तान्यचिन्तितमा
क्षितान्यनुपदिष्टान्यदृष्टपूर्वाणि मे हतपुण्यायाः कृपणानि
सहस्राणि प्रादुरभवन् । कुतस्ते संलापाः कुतस्तान्यति
वैक्लव्यरुदितानि ।

इत्येवमात्मवृत्तान्तमावेदयन्त्या एव च तस्याः सम
कथमप्यतिकष्टमवस्थान्तरमनुभवन्त्या इव चेतनां जहार
वेगान्निष्पतन्तीं च शिलातले तां ससंभ्रमप्रसारितकरः
इव जातपीडश्चन्द्रापीडो विधृतवान् । अश्रुजलार्द्रेण च
येनैवोत्तरीयवल्कलप्रान्तेन शनैः शनैर्वीजयन्संज्ञां ग्राहित
उपजातकारुण्यश्च बाष्पसलिलोत्पीडेन प्रक्षाल्यमानकपोल
लब्धचेतनामवादीत् । भगवति मया पापेन तवायं पुनरभि
मुपनीतः शोको येनेदृशीं दशामुपनीतासि । तदलमनया क
संह्रियतामियम् । अहमप्यसमर्थः श्रोतुम् । अतिक्रान्त
संकीर्त्यमानान्यनुभवसमां वेदनामुपजनयन्ति सुहृज्जनस्य दुः
तन्नार्हसि कथंकथमपि विधृतानिमानसुलभानसूनपुनः पुनः
शोकानलेन्धनतामुपनेतुमिति ।

एवमुक्त्वा दीर्घमुष्णं च निश्वस्य बाष्पायमाणलोचना स

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ादीत् । राजपुत्र या तस्यामतिदारुणायां हतनिशायामोभिः सि नृशंसैरसुभिर्न परित्यक्ता सेदानीं परित्यज्यत इति दूरापेत- ात् । नूनमपुण्योपहताया पापाया मम भगवानन्तकोऽपि परि- गति दर्शनम् । कुतश्च मे कठिनहृदयायाः शोकः । सर्वमिद- ्रमस्य दुरात्मनः शठहृदयस्य । सर्वथाहमनेन त्यक्तत्रपेण पत्रपाणामग्रेसरीकृता । यया चाधिगतमदनवेदनया वज्रमय्ये- ऽनुभूतं तस्याः का गणना कथनं प्रति । किं वापरमतः कष्ट- माख्येयमन्यद्भविष्यति यन्न शक्यते सोढुमाख्यातुं वा । केवल- िय वज्रपातस्यानन्तरमाश्चर्यं यद्भूत्तदावेदयामि । आत्मनश्च ागधारणकारणलव इवाव्यक्तो यः समुत्पन्नस्तं च कथयामि । ा दुराशामृगतृष्णिकया गृहीताहमिदमुपरतकल्पं परकीयमिव रभूतमप्रयोजनमकृतज्ञं च हतशरीरं वहामि तदलं श्रूयताम् ।

ततश्च तथाभूते तस्मिन्नवस्थान्तरे मरणैकनिश्चया तत्तद्बहुविलप्य लिकामब्रवम् । अय्युत्तिष्ठ निष्ठुरहृदये कियद्रोदिमि । काष्ठा- ाहृत्य विरचय चितामनुसरामि जीवितेश्वरमिति । अत्रान्तरे टेति चन्द्रमण्डलविनिर्गतो गगनादवतीर्य महाप्रमाणः पुरुषो ापुरुषलक्षणोपेतो दिव्याकृतिरैरावतकरपीवराभ्यां बाहुभ्यां ुपरतमुत्क्षिप्य दुन्दुभिनादगम्भीरेण स्वरेण वत्से महाश्वेते परित्याज्यास्त्वया प्राणाः पुनरपि तवानेन सह भविष्यति ागमः । इत्येवमाहतः पितेवाभिधाय सहैवानेन गगनतल- ुत्पतत् । अहं तु तेन व्यतिकरेण सभया सविस्मया सकौतुका न्मुखी किमिदमिति कपिञ्जलमपृच्छम् । असौ तु ससंभ्रम- त्वैवोत्तरमुदतिष्ठत् । दुरात्मन्नन्तक क मे वयस्यमपहृत्य च्छसीत्यभिधायोन्मुखः संजातकोपो बध्नन्सावेगमुत्तरीयवल्कलेन



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


परिकरमुत्पतन्तं तमेवानुसरन्नन्तरिक्षमुदगात् । पश्यन्त्या मे सर्व एव तें तारागणमध्यमविशन् ।

मम तु तेन द्वितीयेनेव प्रियतममरणेन कपिञ्जल द्विगुणीकृतशोकायाः सुतरामदीर्यत हृदयम् । किंकर्तव्यता तरलिकामब्रवम् । अयि न जानासि किमेतदिति । तदवलोक्य स्त्रीस्वभावकातरतया तस्मिन्क्षणे शोकाभि भयेनाभिभूता वेपमानाङ्गयष्टिर्मम मरणशङ्कया च विषण्णहृदया सकरुणमवादीत् । भर्तृदारिके न जानामि कारिणी । किं तु महदिदमाश्चर्यम् । अमानुषाकृतिरेष पुमेव समाश्वासिता चानेन गच्छता सानुकम्पं पित्रेव भर्तृदा प्रायेण चैवंविधा दिव्याः स्वप्नेप्यविसंवादिन्यो भवन्त्याकृत किमुत साक्षात् । न चाल्पमपि विचारयन्ती कार मिथ्याभिधाने पश्यामि । अतो युक्त विचार्यात्मानमस्मा परित्यागव्यवसायान्निवर्तयितुम् । अतिमहत्खल्विदमाश्वासन मस्यामवस्थायाम् । अपि च तमनुसरन्गत एव कपिञ्ज तस्माच्च कुतोऽयं को वायं किमर्थं वानेनायमपगतासु नीतः क्व वा नीतः कस्माच्चासंभावनीयेनामुना पुनः समाग प्रदानेन भर्तृदारिका समाश्वासितेति सर्वमिदमुपलभ्य वा मरणं वा समाचरिष्यसि । अदुर्लभं हि मरणमध्यवसि पश्चादप्येतद्भविष्यति । न च जीवन्कपिञ्जलो भर्तृदारिका स्थास्यति । तेन तत्प्रत्यागमनकालावधयोऽपि तावद्धि ममी प्राणाः । इत्यभिदधाना पादयोर्मे न्यपतत् । अहं तु लोकदुर्लङ्घ्यतया जीविततृष्णायाः क्षुद्रतया च स्त्रीस्वभावस्य तद्वचनोपनीतया दुराशामृगतृष्णिकया कपिञ्जलप्रत्यागमन

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तस्मिन्काले तदेव युक्तं मन्यमाना नोत्सृष्टवती जीवितम् । ाशया हि किमिव न क्रियते । तां च पापकारिणीं काल-त्रिप्रतिमां वर्षसहस्रायमाणां यातनामयीमिव दुःखमयीमिव रकमयीमिवाग्निमयीमिवोत्सन्ननिद्रा तथैव क्षितितले विचेष्टमाना ुकणधूसरैरश्रुजलार्द्रकपोलसंदानितैर्विमुक्तव्याकुलैः शिरोरुहै-परुद्धमुखी निर्दयाक्रन्दजर्जरस्वरक्षयक्षामेण कण्ठेन तस्मिन्नेव रस्तीरे तरलिकाद्वितीया क्षपां क्षपितवती ।

प्रत्यूषसि तूत्थाय तस्मिन्नेव सरसि स्नात्वा कृतनिश्चया तत्प्रीत्या मेव कमण्डलुमादाय तान्येव च वल्कलानि तामेवाक्षमालां हीत्वा बुद्ध्वा निःसारतां संसारस्य ज्ञात्वा च मन्दपुण्यता-त्मनो निरूप्य चाप्रतीकारदारुणतां व्यसनोपनिपातानामाक-य्य दुर्निवारतां शोकस्य दृष्ट्वा च निष्ठुरतां दैवस्य चिन्तयित्वा ातिबहुलदुःखतां स्नेहस्य भावयित्वा चानित्यतां सर्वभावाना-वधार्य चाकाण्डभङ्गुरतां सर्वसुखानामविगणय्य तातमम्बां च रित्यज्य सह परिजनेन सकलबन्धुवर्गं निवर्त्य विषयसुखेभ्यो ः संयम्येन्द्रियाणि गृहीतब्रह्मचर्या देवं त्रैलोक्यनाथमनाथ-रणमिमं शरणार्थिनी स्थाणुमाश्रितवत्यस्मि । अपरेद्युश्च कुतोऽपि ुपलब्धवृत्तान्तस्तातः सहाम्बया सहबन्धुवर्गेणागत्य सुचिरं ताक्रन्दैस्तैस्तैरुपायैरभ्यर्थनाभिश्च बहुभिरुपदेशैश्चानेकप्रकारैः सान्त्वनैश्च नानाविधैर्गृहगमनाय मे महान्तं यत्नमकरोत् । ा च नेयमस्माद्व्यवसायात्कथंचिदपि शक्यते व्यावर्तयितुमिति श्चयमधिगतवांस्तदा निराशोऽपि दुस्त्यजतया दुहितृस्नेहस्य पुनः र्मया विसृज्यमानोऽपि बहून्दिवसान्स्थित्वा सशोक एवान्त-मानहृदयो गृहानयासीत् । गते च ताते ततः प्रभृति देवस्या-

CC-0.Panini Kanya Maha Vidyalaya Collection.



Digitized by Arya Samaj Foundation Chennai and eGangotri



श्रमोक्षमात्रेण किल कृतज्ञतां दर्शयन्ती तदनुरागकृशमिदमपुण्य बहुलमस्तमितलज्जममङ्गलभूतमनेकक्लेशायाससहस्रनिवासं दग्ध शरीरकं बहुविधैर्नियमशतैः शोषयन्ती वन्यैश्च फलमूलवारिभि र्वर्तमाना जपव्याजेन तद्गुणगणानिव गणयन्ती त्रिसन्ध्यमस्मिन् सरसि स्नानमुपस्पृशन्ती प्रतिदिनमर्चयन्ती देवं त्र्यम्बकमस्याम् गुहायां तरलिकया सह दीर्घं शोकमनुभवन्ती सुचिरं न्यवसम्। साहमेवंविधा पापकारिणी निर्लक्षणा निर्लज्जा क्रूरा च नृशंसा च गर्हणीया निष्प्रयोजनोत्पन्ना निष्फलजीविता निर्नाथा निरवलम्बना निःसुखा च। किं मया दृष्टया पृष्टया वा कृतब्राह्मणवध महापातकया करोति महाभागः। इत्युक्त्वा पाण्डुना वल्कलोपान्तेन शशिनमिव शरन्मेघशकलेनाच्छाद्य वदनं दुर्निवारबाष्पवेगमपारयन्ती निवारयितुमुन्मुक्तकण्ठमतिचिरमुच्चैः प्रारोदीत्।

चन्द्रापीडस्तु प्रथममेव तस्या रूपेण विनयेन दाक्षिण्येन मधुरालापतया निःसङ्गतया चातितपस्वितया च प्रशान्ततया च निरभिमानतया च महानुभावत्वेन च शुचितया चोपारूढ गौरवोऽभूत्। तदानीं तु तेनापरेण दर्शितसद्भावेन स्ववृत्तान्त कथनेन तया च कृतज्ञतया हृतहृदयः सुतरामारोपितप्रीतिरभवत्। आर्द्रीकृतहृदयश्च शनैः शनैरेनामभाषत। भगवति क्लेशभी रकृतज्ञः सुखासङ्गलुब्धो लोकः स्नेहसदृशं कर्मानुष्ठातुमशक्तो निष्फलेनाश्रुपातमात्रेण स्नेहमुपदर्शयन्रोदिति। त्वया तु कर्मणा सर्वमाचरन्त्या किमिव न प्रेमोचितमाचेष्टितं येन रोदिषि तदर्थमाजन्मनःप्रभृति समुपचितपरिचयः प्रेयानसंस्तुत इव परित्यक्तो बान्धवजनः। संनिहिता अपि तृणावज्ञयावधीरिता विषयाः। विमुक्तान्यतिशयितसुनासीरसमृद्धीन्यैश्वर्यसुखानि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



गृहीतं ब्रह्मचर्यम् । आयोजितस्तपसि महत्यात्मा । वनिताजन-दुष्करमतिकष्टमङ्गीकृतमरण्यावस्थानम् । अपि चानायासेनैवात्मा-दुःखाभिहतैः परित्यज्यते । महीयसा तु यत्नेन गरीयसि क्लेशे निक्षिप्यते केवलम् । यदेतदनुमरणं नाम तदतिनिष्फलम् । अविद्वज्जनाचरित एष मार्गः । मोहविलसितमेतत् । अज्ञान-पद्धतिरियम् । मौर्ख्यस्खलितमिदम् । यदुपरते पितरि भ्रातरि सुहृदि भर्तरि वा प्राणाः परित्यज्यन्ते । स्वयं चेन्न जहति न परित्याज्याः । अत्र हि विचार्यमाणे स्वार्थ एव प्राणपरित्यागो-यमसह्यशोकवेदनाप्रतीकारत्वादात्मनः । उपरतस्य तु न कमपि गुणमावहति । न तावत्तस्यायं प्रत्युज्जीवनोपायः । न धर्मोप-चयकारणम् । न शुभलोकोपार्जनहेतुः । न निरयपातप्रतीकारः । न दर्शनोपायः । न परस्परसमागमनिमित्तम् । अन्यामेव स्वकर्म-फलपरिपाकोपचितामसाववशो नीयते भूमिम् । असावप्यात्म-घातिनः केवलमेनसा संयुज्यते । जीवंस्तु जलाञ्जलिदाना-दि[illegible]ः बहूपकरोत्युपरतस्यात्मनश्च । मृतस्तु नोभयस्यापि । स[illegible]त्रावत्प्रियामेकपत्नीं रतिं भगवति भर्तरि मकरकेतौ हरनय-नहुतभुजा दग्धेप्यविरहितामसुभिः । उत्तरां च विराटदुहितरं बालां बालशशिनीव नयनानन्दहेतौ विनयवति विक्रान्ते च पञ्चत्वमभिमन्यावुपगतेऽपि धृतदेहाम् । अन्याश्च रक्षःसुरासुरमुनि-मनुजसिद्धगन्धर्वकन्यका भर्तृरहिताः श्रूयन्ते सहस्रशो विधृत-जीविताः ।

प्रोन्मुच्येतापि जीवितं संदिग्धोऽप्यस्य समागमो यदि स्यात् । भगवत्या तु ततः पुनः स्वयमेव समागमसरस्वती समाकर्णिता । अनुभवे च को विकल्पः । कथं च तादृशानामप्राकृताकृतीनां

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


महात्मनामवितथगिरां गरीयसापि कारणेन गिरि वैतथ्यमा कुर्यात् । उपरतेन च सह जीवन्त्या कीदृशी समागतिः । निःसंशयमसावुपजातकारुण्यो महात्मा पुनः प्रत्युज्जीवनार्थ नमुत्क्षिप्य सुरलोकं नीतवान् । अचिन्त्यो हि महात्मनां प्रभाव बहुप्रकाराश्च संसारवृत्तयः । चित्रं च दैवम् । आश्च तिशययुक्ताश्च तपःसिद्धयः । अनेकविधाश्च कर्मणां शक्तय अपि च सुनिपुणमपि विमृशद्भिः किमिवान्यत्तदपहरणे कार माशङ्क्येत जीवितप्रदानादृते । न चासंभाव्यमिदमवगन्तव्यं भ वत्या । चिरप्रवृत्त एष पन्थाः । तथा हि । विश्वावसुना गन्ध राजेन मेनकायामुत्पन्नां प्रमद्वरां नाम कन्यामाशीविषवि जीवितां स्थूलकेशाश्रमे भार्गवस्य नप्ता प्रमतितनयो मुनिकुमार रुरुर्नाम स्वायुषोऽर्धेन योजितवान् । अर्जुनं चाश्वमेधतुरग सारिणमात्मजेन बभ्रुवाहननाम्ना समरशिरसि शरापहृतप्रा मुलूपी नाम नागकन्या सोच्छ्वासमकरोत् । अभिमन्युतनयं परीक्षितमश्वत्थामास्त्रपावकपरिप्लुष्टमुदरादुपरतमेव निर्गत प्रलापोपजनितकृपो भगवान्वासुदेवो दुर्लभानसून्प्रापित अत्रापि कथंचिदेवमेव भविष्यति । तथापि किं क्रियते । क उ लभ्यते । प्रभवति हि भगवान्विधिः । बलवती च नियति आत्मेच्छया न शक्यमुच्छ्वसितुमपि । अतिपिशुनान्यस्यैकान्तनि रस्य दैवहतकस्य विलसितानि न क्षमन्ते दीर्घकालमव्याज रमणीयं प्रेम । प्रायेण च निसर्गत एवानायतस्वभावभङ्गुर सुखान्यायतस्वभावानि च दुःखानि । तथा हि । कथमप्येक ज्जन्मनि समागमो जन्मान्तरसहस्राणि च विरहः प्राणिना अतो नार्हस्यनिन्द्यमात्मानं निन्दितुम् । आपतन्ति हि संसार

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तस्मिन्ननामयप्रश्नवचसा संवर्ध्य सर्वानेव तत्सहायान्पुरःस्थितं पुनः पुनः सस्पृहमालोक्य केयूरकमवादीत् । केयूरक त्वद्दर्शनेनैव भद्रं देव्याः सपरिवाराया इत्येतदावेदितम् । आगमनकारणमपि विश्रान्तः सुखितः कथयिष्यसि । इत्युक्त्वा संभ्रान्तागतारोहकढौकितां करिणिमारुह्य कुतोऽस्य जनस्य सुखितेत्यभिदधानमेव केयूरकं पृष्ठतः कृत्वा पत्रलेखां चारोप्य स्वभवनमयासीत् । तत्र च निषिद्धाशेषराजलोकप्रवेशः प्रविश्य वल्लभोद्यानं सपरिवारेण केयूरकेणसहोत्ताम्यता चेतसा-चेतितमेव दिवसकरणीयं निर्वर्तयामास । निर्वर्त्य च पत्रलेखा-द्वितीयः सुदूरोत्सारितपरिजनः केयूरकमाहूयाब्रवीत् । केयूरक कथय देव्याः कादम्बर्याः समदलेखाया महाश्वेतायाश्च संदेशम् । इत्यभिहितवती चन्द्रापीडे पुरःसप्रश्रयमुपविश्य केयूरकोऽप्यगादीत् । देव किं विज्ञापयामि । नास्ति मयि संदेशलवोऽपि देव्याः कादम्बर्याः समदलेखाया महाश्वेताया वा । यदैव पत्रलेखां मेघनादाय समर्प्यागतेन प्रतिनिवृत्य मयायं देवस्योज्जयिनी-गमनवृत्तान्तो निवेदितस्तदैवोर्ध्वं विलोक्य दीर्घमुष्णं च निश्वस्य सनिर्वेदमेवमेतदित्युक्त्वोत्थाय महाश्वेता पुनस्तपसे स्वमेवाश्रम-पदमाजगाम । देव्यपि कादम्बरी झटिति हृदयेऽयोघनेनेवाभि-हतातर्कितापतितशुष्काशनिनेव मूर्ध्नि ताडितान्तःपीडाकूणन-निमीलितेन चक्षुषा मूर्च्छितेव मुषितेव परिभूतेव वञ्चितेव चोन्मुक्तेव चान्तःकरणेनाविदितमहाश्वेतागमनवृत्तान्ता चिरमिव स्थित्वोन्मील्य नयने विलक्षेव लज्जितेव विस्मृतेव विस्मयस्तब्ध-दृष्टिर्महाश्वेतायाः कथयेति सासूयमिव मामादिश्य मदलेखायां पुनर्वलितमुखी सविलक्षस्मितं मदलेखेस्ति केनचिदपरेणैतत्कृतं

Digitized by Arya Samaj Foundation Chennai and eGangotri


करिष्यते वा यत्कुमारेण चन्द्रापीडेनेत्येवमभिदधत्युत्था निवारिताशेषपरिजनप्रवेशा शयनीये निपत्योत्तरवाससोत्तमाङ्गमा मवगुण्ठ्य निर्विशेषहृदयवेदनां मदलेखामप्यनालपन्ती सकलमसं तं दिवसमस्थात् । परेद्युश्च प्रातरेवोपसृतं मामेवं दृढतरशरीरसमु म्रियमाणेष्वेव भवत्स्वहमीदृशीमवस्थामनुभवामीत्युपालभमानेव न मे भवद्भिः पार्श्ववर्तिभिः कार्यमिति निर्भर्त्सयन्तीव किमह मे पुरस्तिष्ठसीत्यन्तर्मन्युवेगेन तर्जयन्तीव च बाष्पपूरोद्रेकमिश्र त्कोपपर्याकुलया दृष्ट्या चिरं मामालोकितवती । तथा दृष्टस्त्व तया दुःखितया देव्यादिष्टमेव गमनायात्मानं मन्यमानोऽहमनिवेद्यैव देव्यै देवपादमूलमुपागतोऽस्मि तच्च देवैकशरणजनजीवितपरि त्राणाकुलमतेः केयूरकस्य विज्ञापनाकर्णनावधानदानेन प्रसादं कर्तुमर्हति देवः । इदानीं तु महान्तमायासमनुभवति त्वदर्थ कादम्बरी । किं करोमि । कथय कथं कथ्यते कया वृत्या वर्ण्यत कीदृशेनोपायेन प्रदर्श्यते केन प्रकारेणावेद्यते कया युक्त्या प्रकाश्यते कतमया वेदनयोपमीयते बलवती तदुत्कण्ठा ।

इत्यावेदयन्तं च केयूरकं भवतु संप्रति न शक्नोम्यतः श्रोतुमित्यामीलनदत्तसंज्ञेव कादम्बरीव्यथाश्रवणवेदनासंभवा कम्पयेव चन्द्रापीडमाक्रामन्ती मूर्च्छा न्यवारयत् । न तु पु रवस्थानिवेदनपरिसमाप्तिः ।

तथा मूर्च्छानिमीलितश्च तामेवानुध्यायन्निव ससंभ्रमप्रतिपन्न शरीरेण केयूरकेण संभावितताल्वृन्तया च पत्रलेखयानुभाव्य र्थसज्जया च नियत्या संज्ञां लम्भितश्चन्द्रापीडः स्वकृतपीडा पराधेन भीतमिवान्तर्बाष्पोपरुध्यमानकण्ठः किमपि स्खलिताक्षरं प्रत्युवाच ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


केयूरक येन प्रकारेणैवमेकान्तनिष्ठुरहृदयमात्मन्यनुत्पन्नानुरागमिव मां संभाव्य देव्या कादम्बर्या दूरीकृतपुनर्मदागमनसंभावनया न त्वमागमनायादिष्टो न संदिष्टं वा किंचिन्महाश्वेतया समुपाहृतानुबन्धया मदलेखया वा त्वन्मुखेन नोपालब्धोऽस्मि तथा मयि पत्रलेखया सर्वमाख्यातम् । तदभिजाततया महानुभावत्वादुदारतया समानशीलतया दक्षिणतया चैकान्तपेशलतया च स्वभावस्यात्मानमात्मना न कलयति देवी कादम्बरी । तत्र देव्याः कादम्बर्या एवाज्ञापराधिनी । ययाधरस्पन्दितमात्रप्रतीक्ष्ये पुरःस्थायिनि दासजने निष्करुणतयात्मानमव्यापारयन्त्या सुखपरिपन्थिनी दुःखदानैकनिपुणा परहृदयपीडानपेक्षिणी लज्जापेक्षिता न जीवितसंदेहदायिनी देव्याः समवस्था । अथवा देव्याः परिजनस्यापि कोऽयमेवंविधो व्यामोहो यदनिच्छन्त्यपि बलादसौ न व्यापारिता । कीदृशी चरणतलप्रतिबद्धस्य दासजनस्योपरि लज्जा । कीदृशं वा गौरवम् कोवानुरोधः । अविश्वस्तचित्तता वा केयमीदृशी । यदेवमात्मनः शिरीषपुष्पकोमलस्येयमतिदारुणा पीडाङ्गीकृता न कृतार्थितो मनोरथः । अथवा क्रमागतमन्तर्धानं वामलोचनानां विशेषतोऽपरित्यक्तनिःशेषबालभावानामनतिप्रबुद्धमुग्धमनसिशयानां कन्यकानाम् । लज्जा न पारिता नामास्मिञ्जने परित्यक्तुं देव्या । मदलेखा तु द्वितीयं हृदयमस्याः । तथा किमेवं कामेन दुरात्मनायास्यमानं देवीशरीरमुपेक्षितम् । किमिति तत्रस्थस्यैव मे कर्णे नावेदितम् । अधुना श्रुत्वापि दिवसक्रमगम्येऽध्वनि किं करोमि । मलयानिलाहतलताकुसुमपातस्याप्यसहं देवीशरीरम् । वज्रसारकठिनहृदयैरपि दुर्विषहाः स्मरेषवः । न ज्ञायते निमे-


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


षेणैव किं भवतीति । प्रायेण च देव्याप्यनुभवनीय ए मर्थः । यथा चास्य दुःखैकदानव्यसनिनो दुर्घटघटनापण्डि यत्किंचनकारिणो निष्कारणकुपितस्य हतविधेः सर्वतो वि समारम्भं पश्यामि तथा जानामि नैतावता स्थास्यती अन्यथा क्व निष्प्रयोजनाश्वमुखमिथुनानुसरणेनामानुषभूमि नम् । क्व च तत्र तृषितस्याच्छोददर्शनम् । क्व तत्तीरे विश्र स्यामानुषगीतध्वनेराकर्णनम् । क्व तज्जिज्ञासागतस्य महा वलोकनम् । क्व तत्र तरलिकया सह तवाभिगमनेन मद्गमनप्रस्ता क्व महाश्वेतया सह हेमकूटगमनम् । क्व तत्र देवीदर्शन क्वानुरागोत्पत्तिरस्मिञ्जने देव्याः । क्व वापरिपूर्णमनोर मे पितुरलंघनीया गमनाज्ञा । तत्सुदूरमारोप्य पातिता वयं खल नाकार्यकारिणास्मत्कर्मबलनियोगदक्षेण दग्धवेधसा । तथापि संभावयितुं प्रयतामहे ।

इत्यभिदधत्येव चन्द्रापीडे नितरामयमनेनैव कादम्ब वृत्तान्तेन संतापितस्तत्किमपरमहमेनमात्मतेजसा संतापय त्युत्पन्नदय इव भगवांस्तिग्मदीधितिः संजहार करसहस्र क्रमेणैव चन्द्रमस्यपि भगवत्युदयगिरिशिखरमारूढे प्रौढे प्र समये चन्द्रापीडस्तस्मिन्नेव वल्लभोद्याने चन्द्रमणिशिल विमुच्याङ्गानि चरणसंवाहनोपसृतं केयूरकमवादीत् । के किमाकलयसि । यावद्वयं परापतामस्तावत्प्राणान्संधारयि देवी कादम्बरी । पारयिष्यति वा तां विनोदयितुं मदले आगमिष्यति वा पुनस्तत्समाश्वासनाय महाश्वेता । मत्परि द्वेजिता प्रतिपत्स्यते वा शरीरस्थितये तयोरभ्यर्थनाम् । द्र

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुनस्तस्याः स्मरसृक्कोपान्तमालोलतारकमुत्त्रस्तहरिणशावकायते-णं मुखमिति ।

स तु व्यज्ञपयत् । देव धैर्यं समवलम्ब्य गमनाय यत्नः यताम् । तिष्ठतु तावदासन्नवर्ती सखीजनः परिजनो वा । स्या हि त्वदालोकनेच्छैव स्वेच्छया निमेषितुमपि न ददाति । मागमाशयैवावष्टब्धं हृदयम् । श्वसितमेव मुखेऽवहितम् । मान्च एव क्षणमपि शरीरं न मुञ्चति । दिवानिशं बाष्प व लोचनपथस्थायी । प्रजागर एव रात्रावपि दत्तदृष्टिः । रतिरेव नैकाकिन्यः क्षाम्यत्यवस्थानम् । जीवितमेव कण्ठ-स्थानान्नापसरति । एवं वदन्तमेनमादिदेश विश्रान्तये केयूरकम् । आत्मनापि गमनचिन्तां प्राविशत् । यदि तावदकथयित्वा निपत्य चरणयोरनाघ्रातः शिरस्यगृहीताशीः सहसोच्छृंख-लित एव तातेनाम्बया वा वक्तव्यमपक्रम्य गच्छामि ततो गतस्यापि मम कुतः सुखं किं श्रेयः कुतो वा फलावाप्तिः । कीदृशी हृदयनिर्वृतिः । अथवा तिष्ठतु तावदियमुत्तरकालगामिनी चिन्ता । अपक्रम्य गत एव कथमहम् । यत्तातेन स्वभुजाद-वारोप्य मय्येव राज्यभारः समारोपितः । तदानाख्याय पद-मपि निर्याते मय्यवश्यमष्टाभ्यो दिग्भ्यो राजभिरवश्यमनुधावि-तव्यम् । तिष्ठन्तु तावत्सेवापरा राजानः । सुखपरिभुक्ताः प्रजा अपि तातस्नेहात्परित्यक्तपुत्रदाराः पृष्ठतो लगिष्यन्तीति मे चेतसि । अपि च तातस्यापि कोपरोऽस्ति यस्मिन्मदीयं स्नेहं संक्रमय्य मय्यपक्रान्ते यातु किमनेन गतेनागतेन वेत्यविनय-कोपितोऽवष्टम्भं कृत्वा स्थास्यति । कस्य वापरस्य मुखमालोकयन्ती सुखायमानहृदया मत्प्रत्यानयनाय कृतार्तप्रलापा न तात-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मेवाकुलीकरोत्यम्बा । ताते च पृष्ठतो लग्नेऽष्टादशद्वीपमा मेदिन्येव लग्ना भवति । तदा मया क्व गतम् । क्व प्रस्थित क्व विश्रान्तम् । क्व यातम् । क्व भुक्तम् । क्वापसृतम् । क्वाह मया गोपयितव्यः । समासादितेन वात्र कथं मया वदनं यितव्यम् । पृष्टेन वा किमुत्तरं दातव्यम् । अथापि कथंचि नियोगान्निःसृतोऽस्मि तथाप्यनायासनीयं तातमेवं महाप स्यायासेऽम्बां वा निजापक्रमणशोकार्णवे पातयता किं भवत्यपुण्यवता । अपि च स बहुदिवसप्रवासोपतप्तः स्कन्धा वारोऽपि मेऽद्यापि न परापतति । तेनापरसंविधानादर्धपथा निवृत्य पुनर्धावितव्यम् । अथावेद्य तातस्याम्बायाश्च ताभ्यां विसर्जितः संविधानेन गच्छामि । तत्रापि किं कथयामि । मह स्नेहदुःखिता गन्धर्वराजपुत्री कादम्बरी मामुद्दिश्य मकरके नायास्यमाना दुःखं तिष्ठतीति । किं वा बलवान्मे तस्यामनु न तया विनाहं प्राणान्संधारयामीति । किं तस्या मम च द्व रपि जीवितनिबन्धनहेतुभूतया महाश्वेतया तत्परिणयनाय संदिष्टमिति । किं वा तद्दुःखमपारयन्सोढुमयं केयूरकस्तत्र मां नेतुमागत इति । अपरोऽपि वा कश्चिद्व्यपदेशो न शक्य एव पुनर्गमनाय कर्तुम् । संप्रत्येव समधिकाद्वर्षत्रयात्प्रसा वसुधां प्रत्यागतोऽस्मि । अद्यापि साधनमेव न परापत अकथयित्वा च गमनकारणं कथमात्मानं मोचयामि । कथं मुञ्चतु तातोऽम्बा वा । तत्सुहृत्साध्येऽस्मिन्नर्थेऽनर्थः पतितः करोम्येकाकी । वैशम्पायनोऽप्यसन्निहितः पार्श्वे मे । किं करोमि कं पृच्छामि । केन सह निरूपयामि । को मे समुपदिशतु को वापरो मे निश्चयाधानं करोतु । कस्यापरस्य वा विवेकि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पमाज्ञा । कस्य वान्यस्य श्रुतं श्रोतव्यम् । को वापरो वेत्ति स्थितुम् । कस्य वापरस्य मय्यसाधारणः स्नेहः । केन वापरेण सह समानदुःखो भवामि । को वापरो मयि दुःखिते दुःखी सुखिते सुखी वा । को वापरो रहस्यावेदनस्थानम् । कस्यापरस्योपरि कर्तव्यभारमवक्षिप्य निर्वृतात्मा तिष्ठामि । कस्य वापरस्य मत्कार्ये पर्याकुलता । को वापरो मयानुकोपितं तातमम्बां च परिबोध्य नेतुं समर्थः । इत्येव चिन्तयत एवास्य स्कन्ना निशा दुःखदीर्घापि क्षयमगमत् । प्रातरेव च किंवदन्तीं विपथाश्राव यया किल दशपुरीं यावत्परागतः स्कन्धावार इति । ताम्यां च श्रुत्वा समुच्छ्वसितचेताश्चकार चेतसि अहो । धन्योऽस्मि । अहो भगवतो विधेरनुग्राह्योऽस्मि । यस्य मेऽनुध्यानानन्तरमेव परागतो द्वितीयं हृदयं वैशम्पायन इति । प्रहर्षपरवशश्च प्रविशन्तमनुलोक्य दूरत एव कृतप्रमाणं केयूरकमवादीत् । केयूरक करतलवर्तिनीं सिद्धिमधुनावधारय । प्राप्तो हि वैशम्पायन इति ।

स तु तदाकर्ण्य गमनपरिलम्बकृतया चिन्तयान्तःशून्य एव चन्द्रकमापतितं महती हृदयनिर्वृतिर्देवस्य जातेत्यभिदधदेवोपसृत्योपविश्य पार्श्वे वैशम्पायनागमनालापमेवानुबध्य मुहूर्तमिव प्रसादसंज्ञोत्सारितसमस्तपरिजनं चन्द्रापीडं व्यज्ञपयत् । देवावस्थैवेयमावेदयति निःसंशयं देवस्य गमनम् । अवश्यं च देवस्य देवीप्राप्त्या भवितव्यम् । केन कदा वावलोकितो ज्योत्स्नारहितश्चन्द्रमाः । कमलाकरो वा मृणालिकया विना । उद्यानभगो वा लताशून्यः । किं तु यावद्वैशम्पायनः परापतति यावच्च तेन सह गमनसंविधानं निरूपयति देवस्तावदवश्यं कालक्षेपेन भाव्यम् । यादृशी चाकालक्षमा देव्याः शरीरावस्था

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तादृशी निवेदितैव मया । सर्वोऽपि प्रत्याशया धार्यते । देव्या पुनर्देवदर्शनेऽद्य यावन्निष्प्रत्याशमेव हृदयं केनाश्वासेनेन वर्तताम् मद्वार्तोपलम्भादेतदुत्पत्स्यते चेतसि यथास्ति कार्यं मे जीवि दुःखान्यपि सहन्ती धारयाम्येतादिति । अतो विज्ञापयामि चेतसा त्वग्रतो गत एव देवः शरीरेणाप्यनुपदमुच्चलित एव किमपरं मयात्र स्थितेन साधनीयम् । तद्देवागमनोत्स वेदनाय गमनानुज्ञया प्रसादं क्रियमाणमिच्छति मे प्रणयप्रस दुर्ललितं हृदयमिदानीमेव ।

इति विज्ञापिते केयूरकेणान्तःपरितोषविकसितया विक नीलोत्पलपुञ्जमालिकयेव दृष्ट्या दर्शितप्रसादश्चन्द्रापी प्रत्युवाच । किमुच्यते । कस्यापरस्येदृशी देशकालज्ञता । वापरोऽस्मास्वेवं निर्व्याजभक्तिः । कस्यापरस्येदृशास्मद्दुः सहिष्णुतानपेक्षितस्वशरीरशक्तिरुत्साहश्च । तत्साधु चिन्तितम् गम्यतां देव्याः प्राणसंधारणाय । मदागमनप्रत्ययार्थं च पत्रले प्यग्रतस्त्वयैव सह प्रयातु देवीपादमूलम् । इयमपि प्रसादभू रेव देव्याः । इमामप्यालोक्य कियत्यपि धृतिरवश्यमुत्पत्स्य इति मे चेतसि । अपि चास्या अपि देव्यामस्त्येव स्नेहो भक्तिश्च इत्यभिधाय पृष्ठतः समुपविष्टामेव तां पत्रलेखामद्राक्षीत् सा तु किंचिदवनतमुखी निजाज्ञाक्षराणि प्रयच्छतु देव इ व्यज्ञपयत् । कृतप्रस्थितिनिश्चयायां च तस्यां मेघनादाह्वान प्रतीहारीमादिदेश । आदेशानन्तरमेवागतं च दूरतः प्रण माज्ञाप्रतीक्ष स्वयमेवाहूय सोपग्रहमादिदेश मेघनादम् । मेघना यस्यां भूमौ पत्रलेखानयनाय पूर्वं मया त्वं स्थापितस्तां भूमिं याव पत्रलेखामादाय केयूरकेण सहाग्रतो गच्छ । अहमपि वैशम्पाय

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मालोक्यानुपदमेव ते तुरंगमैः परागतः । इत्यादिश्य यथाज्ञापयति देव इति कृतनमस्कृतौ त्वरितगमनसंविधानाय निष्क्रान्ते मेघनादे देव किमतः परं विलम्बेनेत्यभिधाय मेघनादनिर्गमनानन्तरं गमनप्रणामोत्थितं केयूरकं सस्नेहमाहूय सबाष्पया दृष्ट्या पुनःपुनरालोक्य परिष्वज्य च सपुलकाभ्यां दोर्भ्यामात्मकर्णादपनीयानेकवर्णरुचिरं संदेशमिव कर्णाभरणमस्य कर्णे कृत्वा कण्ठागतबाष्पगद्गदिकागृह्यमाणाक्षरमवादीत् । केयूरक त्वया तु मे देवीसंदेशो नानीत एव । तत्किं तव हस्ते तदनुरूपं प्रतिसंदिशाम्यपूर्वम् । विज्ञापयितव्या देवी । तत्रापि किमलीकलज्जाजालभारोद्वहनेन त्वामायासयामि । यात्येव पत्रलेखा देवीपादमूलम् । इयं विज्ञापयिष्यति । इत्यभिदधदेवातर्कितोपनतात्मविरहपीडाममङ्गलशङ्कया कृतयत्नामपि बाष्पवेगमपारयन्तीं संधारयितुं चरणपाताभिमुखीं पत्रलेखां प्रणयेनाभिमुखो भूत्वा बद्धाञ्जलिरभाषत । पत्रलेखे साञ्जलिबद्धेन शिरसा प्रणम्य मदीयेन विज्ञाप्या देवी कादम्बरी । येन सर्वखलानां धुरि लेखनीयेन तथा प्रथमदर्शनेऽपि वत्सलत्वात्स्वभावस्य दर्शितप्रसादातिशयां देवीं प्रणामेनाप्यसंभाव्य गच्छता प्रज्ञा जडतया ज्ञानं मौढ्येन धीरता तारल्येन स्नेहलता रौक्ष्येण गौरवं लघुतया प्रियंवदता पारुष्येण मृदुहृदयता नैष्ठुर्येण स्थैर्यं चञ्चलतया धैर्यं भीरुतया दयालुता निस्त्रिंशत्वेनार्जवं मायाजालेन सत्यवादितालीककाकुसंपादनेन दृढभक्तितावज्ञानेन पेशलता कौटिल्येन लज्जा धाष्टर्येनौदार्यं क्षुद्रतया दाक्षिण्यममहानुभावतया प्रश्रयोऽभिमानेन कृतज्ञता कृतघ्नतया शीलं पौरोभाग्येन सर्वगुणा एव दोषैः परिवर्तिताः स कथमिवापरं गुणमवलम्ब्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पुनः परिग्रहाय विज्ञापयतु । केन वाङ्गीकरोतु देवी । यच्च चानपेक्षितगमनाज्ञया निर्यन्त्रणत्वाद्गतोऽहमिति विज्ञप्तं सैव वार्ता विज्ञापयति । यथा च मे न निष्फलमागमनं भवति जगद्व शून्यं तथा देव्यात्मसंधारणायात्मनैव यत्नः कार्यः । इति संदिश्य पुनराह । पत्रलेखे त्वयापि यान्त्याध्वनि न मद्विरहपीडा भावनीया । न शरीरसंस्कारेऽनादरः करणीयः । नाहारवेलाति क्रमणीया । न येन केनचिदज्ञातेन पथा यातव्यम् । न यत्र तत्रैवानिरूप्यावस्थातव्यमुषितव्यं वा । न यस्य कस्यचिदपरि ज्ञायमानस्यान्तरं दातव्यम् । सर्वदा शरीरेऽप्रमादिन्या भाव्यम् । किं करोमि । त्वत्तोपि मे वल्लभतरा देवीप्राणाः येनैवमेकाकिनी तेषां संधारणाय विसर्जितासि । अपि च मम जीवितमपि तवैव हस्ते वर्तते । तदात्मा यत्नेन परिरक्षणीयः इत्युक्त्वा सस्नेहं परिष्वज्य केयूरकं पुनस्तदवधानदानाय संविधाय महाश्वेताश्रमं यावत्पुनस्त्वयैव सहानया मन्नयनाय गन्तव्यमित्यादिश्य व्यसर्जयत् ।

निर्गतायां च केयूरकेण सह पत्रलेखायां किं शीघ्रमेते यास्यन्ति नेत्यन्तरा वा गच्छतां विलम्ब उत्पत्स्यते न वेति कियद्भि र्वा दिवसैः परापतिष्यन्तीत्यनयैव चिन्तया शून्यहृदयः क्षणमि स्थित्वा स्कन्धावारवार्तास्फुटीकरणाय वार्ताहरं विसर्ज्य बहु दिवसान्तरितदर्शनस्य वैशम्पायनस्य प्रत्युद्गमनायात्मानं मोच यितुं पितुः पादमूलमगात् । तत्र चोभयतः ससंभ्रमापसृतप्रतीहार मण्डलवितीर्णविस्तीर्णालोकनमार्गः पितुः प्रणाममकरोत् ।

अथ तारापीडस्तथा दूरत एव कृतप्रणामं चन्द्रापीडमालोक्य निर्भरस्नेहगर्भेण सलिलभरमन्थरेणेव जलधरध्वनिना स्वरेण

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सधीरमेह्येहीत्युक्त्वा ससंभ्रमप्रधावितमपि संभावितशुकनासप्रणाममुपसृत्य पार्श्वे भूमावेव समुपाविशन्तमाकृष्य हठात्पादपीठे समुपवेश्यापरिसमाप्तावलोकनस्पृहेण चक्षुषा सुचिरमालोक्यास्योपारूढयौवनभराभिरामतराण्यङ्गप्रत्यङ्गानि पाणिना स्पृष्ट्वा दर्शयन्शुकनासमवादीत् । शुकनास पश्येयमायुष्मतश्चन्द्रापीडस्योत्सर्पिणी श्मश्रुराजिलेखा समन्तात्समुद्भिन्ना । विवाहमङ्गलयोग्यां दशामारूढोऽयम् । तद्देव्या विलासवत्या सह संमन्त्र्याभिजनरूपा निरूप्यतां काचिज्जगतीपतिकन्यका । दृष्टं हि दुर्लभदर्शनं वत्सस्य वदनम् । संप्रति वधूमुखकमलदर्शनेनानन्दयाम आत्मानम् । इत्युक्तवति तारापीडे शुकनासः प्रत्युवाच ।

साधु चिन्तितं देवेन । अनेन तु सहृदयेन हृदये समारोपिता एव सर्वविद्याः । संभाविता एव सर्वाः कलाः । स्वीकृता एव सर्वाः प्रजाः गृहीता एव सर्वदिग्वधूनां कराः । स्थापितैव निश्चला कुटुम्बपदे राजलक्ष्मीः । ऊढैव चतुरुदधिमेखलाभिहि[illegible]णा भूः । किमपरमवशिष्यते यदनेन न परिणीयते । इति [illegible]क्तवति शुकनासे लज्जावनम्रवदनश्चन्द्रापीडश्चकार चेतसि [illegible] अहो संवादो येन मे कादम्बरीसमागमोपायचिन्तासमका[illegible]मेवेदृशी तातस्य बुद्धिरुत्पन्ना । तद्यदुच्यते अन्धकारे [illegible]ष्टस्यालोको वनगहनप्रविष्टस्यादेशकदर्शनं महार्णवपतितस्य यानपात्राभ्यागमो म्रियमाणस्योपर्यमृतवृष्टिरिति तदेवापतितं मयि । सर्वथा वैशम्पायनदर्शनमात्रकान्तरिता वर्तते मे कादम्बरीप्राप्तिः । इत्येवं चिन्तयत्येव चन्द्रापीडे क्षिति[illegible]रुत्तस्थौ । उत्थाय च तमेव विनयावनम्रपूर्वकायं समवलम्[illegible]सदेशो सकलमेदिनीभारोद्वहनगुरुणा दो-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


दण्डेन शनैः शनैः संचरञ्छुकनासेनानुगम्यमानो विलासवतीभ भवनमगमत् । गत्वा च ससंभ्रमकृताभ्युत्थानां विलासवतीमूर्ध्नि स्थित एवावादीत् । देवि पश्यैषा त्वमपि वधूमुखावलोक सुखस्य कृते नोत्ताम्यसीत्युपालभमानेव देवीं वत्सस्य श्मश्रु राजिशोभा विवाहमङ्गलसंपादनायादिशति । त्वमपरं किमाचिन्त शसीति प्रष्टव्या तदादिशतु देवी । कथ्यमानेऽपि किमपरमद्याशेष हरसि वदनमन्यतो व्रीडया । पृष्टा वा कर्तव्यं नाज्ञापयसि मान वरमातासि संवृत्ता । जानामि चन्द्रापीडस्योपर्यप्रीतिरेषा यद्देव्या मेतत्कार्येष्वनादरोऽवधीरणा च । इत्येवंविधैर्नर्मप्रायैरालापैः सुखाप्रवि मानचेताश्चिरमिव स्थित्वा शरीरस्थितिसंपादनाय निरगात् ।

चन्द्रापीडोऽपि शुकनासमुखेनैव वैशम्पायनप्रत्युद्गमनाय त्मानं मोचयित्वा जननीभवन एव निर्वर्तितशरीरस्थिति म्पायनप्रत्युद्गमनसंविधानविनोदेनैव तं दिवसमनयत् । अव र्णायां च तस्यां यामिन्यां सुहृद्दर्शनौत्सुक्येन शयनगतो जाग्रदेव समधिकमिव यामद्वयं स्थित्वा कादम्बरीस दानाय स्मरसर्वास्त्रमोक्षमिव कुर्वद्भिश्चन्द्रपादैर्द्विगुणि त्साहो गमनसंज्ञाशङ्खनादायादिदेश । अचिराच्च गृहीत ऽङ्गणगतमिन्द्रायुधमारुह्य निर्जगाम नगर्याः । निर्गत्य च रत एवोत्तीर्य शिप्रां दशपुरगामिना मार्गेण प्रावर्तत गन्तुम् अथ तावत्येवापररात्रवेलया योजनत्रितयमवाङ्घयत् । अथाध्वश्रमापहारणायेव प्रवृत्ते वातुमाल्हादकारि रजनीविरा पिशुने मातरिश्वनि क्रमेण चापरदिग्वधूवदन नि पाण्डुरता मुपगतवति चन्द्रबिम्बे उदयगिरिशिखरमा भगवति सह लोकचक्षुषि सप्तवाहे दृष्टिप्रसरक्षमायां यां सहसैवाग्रतो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



गव्यूतिमात्र इव रात्रिप्रयाणकायातं निविशमानं स्कन्धावारमद्राक्षीत् ।

दृष्ट्वा चाकरोच्चेतसि । अहो भद्रकं भवति यदचिन्तितागमन एव प्रविश्य वैशम्पायनं पश्यामि । इत्येवं चिन्तयित्वा छत्रचामरादिभिः स्वचिन्हैः सह निवारिताशेषराजपुत्रलोको जवविशेषग्राहिभिस्त्रिचतुरैस्तुरंगमैरनुगम्यमानो मूर्धानमावृत्योत्तरीयेण रयविशेषग्राहिणेन्द्रायुधेन नानाव्यापारव्यग्रसकललोकमचिन्तित एव स्कन्धावारमाससाद । प्रविशंश्च प्रत्यावासकं वहन्नेव कस्मिन्देशे वैशम्पायनावास इति पप्रच्छ । ततस्तत्संनिहिताभिः स्त्रीभिरितरत्वादप्रत्यभिज्ञाय यथारब्धकर्मव्यग्राभिरेवोद्बाष्पशून्यवदनाभिर्भद्र किं पृच्छसि कुतोऽत्र वैशम्पायन इत्यावेद्यमान आः पापाः किमेवमसंबद्धं प्रलपथेति शून्यहृदय एव ताः प्रतारयन्नन्तर्भिन्नहृदयत्वान्नापराः पृच्छन्नेवोत्त्रस्त इव हरिणशावको यूथपरिभ्रंशविलोल इव करि[illegible] धेनुविरहादुत्कर्ण इव तर्णको न किंचित्पश्यन्न किंचि[illegible]किंचिदालपन्न किंचिदाकर्णयन्न किंचिन्निरूपयन्न क्वचि[illegible]ह्वयन्कागतोऽस्मि किमर्थमागतोऽस्मि क्व चलितोऽस्मि [illegible] पश्यामि किमारब्धं मया किं वा करोमीति [illegible] इव बधिर इव मूक इव जड इवाविष्ट इव कस्मिन्न[illegible]दृश यावत्तादृशेनैव वेगेनावहत् ।

अथ [illegible]ायुधप्रत्यभिज्ञानाद्वार्तयैवानुप्रधावितराजपुत्रलोकदर्शनाच्च देवश्चन्द्रापीड इति समन्तात्ससंभ्रमप्रधावितानामचेतितोत्तरीयस्खलनानामुद्बाष्पशून्यदृष्टीनां दूरादेव लज्जया प्रणामक्रियया च सममेवावनमतां राजन्यसहस्राणां मुखान्यवलोक्य क्व वैश-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


म्पायन इत्यपृच्छत् । ततस्ते सर्वे सममेव विचार्यास्मिंस्तत् वतरतु तावद्देवस्ततो यथावस्थितं विज्ञापयाम इति न्यवेदय चन्द्रापीडस्य तेन तेषां स्फुटाख्यानादपि कष्टतरेण वचसा शल्यगर्भस्फुटितमिव हृदयमासीत् । केवलं तत्कालप्रणयिनी मू सा धारणमकरोत् । तुरगादवतारितं च कुथोपविष्टं च समवयोभिरनतिक्रमणीयैर्मूर्द्धाभिषिक्तपार्थिवैर्धृतमात्मानं त न चेतितवान् । उपलब्धसंज्ञोऽपि वैशम्पायनादर्शनादात्म दर्शनात्किमेतत्क्वाहं वर्ते किं वा मयैतच्चरितमिति भ्रमा इव मुह्यद्भिरिवेन्द्रियैः सर्वमेवानुत्प्रेक्षमाणः केवलं स्कन्धाव गमनेनैव तस्याभावादन्यदसंभावयन्दुर्विषहपीडाभि चेतसा किमारटामि किं हृदयमवष्टभ्य तूष्णीमासे किमात्म माहत्य हठात्प्राणैर्वियोजयामि किमेकाकी कांचिद्दिशं गृही प्रव्रजामीति कर्तव्यतामेव नाध्यगच्छत् । अन्तर्द्रवन्निव दह्य इव स्फुटन्निव सहस्रधा दुःखेन चकार चेतसि । अहो मे र प्यरमणीयः संवृत्तो जीवलोकः । वसन्त्यपि शून्यीभूता सचक्षुषोऽप्यन्धाः ककुभो जाताः । सुनिष्पन्नमपि हतं सुरक्षितमपि मुषितं जीवितफलम् । कं पश्यामि । क कस्मै विश्रम्भं कथयामि । केन सह सुखमासे । निर्गत्य जीवितेन कादम्बर्यापि । वैशम्पायनस्य कृते पृच्छामि । कमभ्यर्थये । को मे ददातु पुनस्तादृशं कथं मया तातस्य शुकनासस्य वात्मा वैशम्पायनेन यितव्यः । किमभिधाय च तनयशोकविह्वलाम्बा मनो संस्थापयितव्या । किं भूमिः काचिदसिद्धा तां साधयितुं त्स्थितः । उत नरपतिः कश्चिदसंघटितस्तत्संघटनाय पश्चा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


लम्बितः । कच्चिद्विद्या वा काचिदगृहीता तां ग्रहीतुं मयोत्संकलितः । इत्येतानि चान्यानि चान्तरात्मना चिरमधोमुख एव विकल्प्य हृदयास्फुटनाद्विलक्षमिवापराधिनमिव महापातकिनमिवात्मानं मन्यमानो वदनमदर्शयच्छनैः कृच्छ्रादिव तानप्राक्षीत् । मय्यागते किं कश्चिदेवंविधोऽन्तरे संग्राम उत्पन्नः । व्याधिर्वा कश्चिदाशुकार्यसाध्यरूपः समुपजातः । येनैतदतर्कितमेव महावज्रपतनमुपनतमिति । ते त्वेवं पृष्टाः सर्वे सममेव करद्वयपिहितश्रुतयो व्यज्ञपयन् । देव शान्तं पापम् । देवशरीरमिव साग्रं वर्षशतं ध्रियते वैशम्पायन इति । एतदाकर्ण्य तूज्जीवित इवानन्दबाष्पनिर्भरः संभाव्य तान्सर्वानेव कण्ठग्रहेणावादीत् । जीवतो वैशम्पायनस्यान्यत्र क्षणमप्यवस्थानमसंभावयता मयैवं पृष्टा भवन्तः । तज्जीवतीत्येतानि तु तावत्कर्णे कृतान्यक्षराणि । अधुना किं वृत्तमस्य येनासौ नागतः । क वा स्थितः केन वा प्रसङ्गेन स्थितः । कथं वा तमेकाकिनमुत्सृज्यायाता भवन्तः । कथं वा भवद्भिर्बलादपि नानीतोऽसावित्येतदवगन्तुमुत्ताम्यति मे हृदयमिति । ते चैवं पृष्टा व्यज्ञपयन् । देव श्रूयतां यथावृत्तम् । पृष्ठतः स्कन्धावारमनुपालयद्भिः शनैः शनैर्वैशम्पायनेन सह भवद्भिरागन्तव्यमित्यादिश्य गतवति देवे तस्मिन्दिवसे सुगृहीतत्वाद्वासेन्धनादिकस्योपकरणजातस्य न दत्तमेव प्रयाणं स्कन्धावारेण । अन्यस्मिन्नहन्याहतायां प्रयाणभेर्यां सज्जीक्रियमाणे साधने प्रातरेवास्मान्वैशम्पायनोऽभ्यधात् । अतिपुण्यं ह्यच्छोदसरः पुराणे श्रूयते । तदस्मिन्स्नात्वा प्रणम्य चास्यैव तीरभाजि सिद्धायतने भगवन्तं भवाभवप्रभवं महेश्वरं शशाङ्कशकलशेखरं व्रजामः । दिव्यजनसेविता केन कदा पुनः स्वप्नेऽपि भूमिरियमालोकिता ।


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


इत्यभिधाय चरणाभ्यामेवाच्छोदसरस्तीरमयासीत् । तत्र च रम्यतयैव सर्वतो दत्तदृष्टिस्तटलतामण्डपमद्राक्षीत् ।

दृष्ट्वा च तमतिचिरान्तरितदर्शनं भ्रातरमिव तनयमिव सुहृदमिव चानन्यदृष्टिर्विस्मृतनिमेषेण चक्षुषा विलोकयन्स्तम्भित इव लिखित इव सुचिरं स्थित्वापारयन्निवाङ्गै धारयितुमाक्रम्यमाण इव मूर्च्छयोन्मुच्यमान इवेन्द्रियैर्झटिति वि न्मुक्ताङ्गः समुपविश्य भूमौ किमप्यन्तरात्मना स्मरन्निवानु यन्निव निर्विकारवदनो गलितलोचनपयोधारासन्तानस्तूष्णीमधो मुखस्तस्थौ । तथावस्थितं च तमवलोक्यास्माकमुदपादि चेतसि चिन्ता । येन केनचिदपह्रियन्त एव रसिकहृदयाः परिणामे मतयोपि किं पुनः कुतूहलास्पदे प्रथमे वयसि वर्तमानः तस्मान्नियतमियमस्येमामतिमनोहरां भूमिमालोक्य भाव हृदयविकृतिरीदृशी जातेति । न चिराच्च तमेवमवदाम वयस्य दृष्टा दर्शनीयानामवधिरेषा । तदुत्तिष्ठ । संप्रति निर्वर्तयामः विधिम् । अतिमहती वेला जाता । सज्जीभूतं साधनम् । प्रया भिमुखः सकलस्कन्धावारस्त्वां प्रतिपालयन्नास्ते । किम विलम्बितेनेति । स त्वेवमुक्तोऽप्यस्माभिरश्रुतास्मदालाप इव इव मूक इवाशिक्षित इव वक्तुं न किंचिदपि प्रत्युत्तरमदात् तमेव केवलमनिमेषपक्ष्मणा निश्चलस्तब्धतारकेण संतताश्रुस्रोत लिखितेनेव चक्षुषा लतामण्डपमालोकितवान् ।

पुनः पुनश्चास्माभिरागमनायानुरुध्यमानस्तद्ग्रथितदृष्टि स्मान्परिच्छेदनिष्ठुरमाह स्म । मया तु न यातव्यमस्मात्प्रदेशा गच्छन्तु भवन्तः स्कन्धावारमादाय । न युक्तं भवतां च पीडभुजबलपरिरक्षितं गते तस्मिन्महासाधनं गृहीत्वास्यां

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


क्षणमप्यवस्थानं कर्तुम् । इत्युक्तवन्तं तमकस्मान्नाम किंचिदस्य दैवादेव वैराग्यकारणमुत्पन्नमित्याशङ्क्य सानुनयमागमनाय पुनः पुनः प्रतिबोध्य तादृशासंबद्धानुष्ठानेन जातपीडा निष्ठुरमप्यभिहितवन्तो वयम् । एवं न युक्तमस्माकं स्थातुम् । भवतः पुनर्देवस्य तारापीडस्यानन्तरादार्यशुकनासाल्लब्धजन्मनो देव्या विलासवत्याङ्कलालितस्य देवेन चन्द्रापीडेन सहैकत्र संवृद्धस्य तथा विद्यागृहे महता यत्नेनैवं शिक्षितस्य युक्तमिदम् । यज्ज्येष्ठे भ्रातरि सुहृदि वत्सले भर्तरि जगन्नाथे गुणवति च भवति सर्वमर्पयित्वा गते तत्परित्यागेनावस्थानम् । कस्यापरस्येदृशो युक्तायुक्तपरिच्छेदः । तिष्ठतु तावदस्माकं तवोपरि स्नेहो भक्तिर्वा । अस्मिंस्तु शून्यारण्ये भवन्तमेकाकिनमुत्सृज्य गताः सन्तो देवेन चन्द्रशीतलप्रकृतिना चन्द्रापीडेनैव किं वक्तव्या वयम् । किमन्यो देवश्चन्द्रापीडोऽन्यो वा भवान् । तदुन्मुच्यतामयं संमोहः । गमनाय धीराधीयताम् । इत्यभिहितोऽस्माभिरीषदिव विलक्षहासेन वदनेनास्मानवादीत् । किमहमेतावदपि न वेद्मि यद्गमनाय मां भवन्तः प्रबोधयन्ति । अपि च चन्द्रापीडेन विना क्षणमप्यहमन्यत्र न पारयामि स्थातुम् । एषैव मे गरीयसी परिबोधना । तथापि किं करोमि । अनेनैव क्षणेन सर्वत्र विगलितं मे प्रभुत्वम् । तथाहि स्मरदिव किमपि मनो नान्यत्र प्रवर्तते । पश्यन्तीव किमपि न दृष्टिरन्यतो वलति । आसक्तमिव क्वापि हृदयं किमपि न जानाति । निगडिताविवान्यत्र पदमपि न दातुं चरणावुत्सहेते । कीलितेव चास्मिन्नेव स्थाने तनुः । तदात्मना त्वहमसमर्थो यातुम् । अथ बलाद्भवन्तो मां निनीषवस्तत्रापि चलितस्यास्मात्प्रदेशादात्मनो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


जीवितधारणं न संभावयामि । अत्र पुनस्तिष्ठतो यदेतदन्तर्हृदं किमप्यनवसीयमानं परिवर्तते मे येनैव विधृतोऽस्मि तेनैवाक धार्यन्ते प्राणा इति चेतसि मे । तदलं निर्बन्धेन । गच्छ भवन्तः । अनुभवन्तु यावज्जीवमातृप्तेश्चन्द्रापीडमुखदर्शनसुखम् । अल्पपुण्यस्य तु तन्मे प्राप्तमपि करतलादेवाच्छिद्य दै नीतम् । इत्यभिदधानश्च कौतुकात्किमेतद्येनैवं भाषसे नार्या देवस्य चन्द्रापीडस्य समीपमित्यास्माभिः पुनः पुनः पृष्टोऽभ्यधात् लज्जेऽहमेवं वक्तुम् । तथापि शपामि वयस्यचन्द्रापीडस्यै जीवितेन यदि किंचिदपि जानामि यत्केन कारणेन न शक्ष्यतो गन्तुमिति । अपि च भवतामपि प्रत्यक्ष एवायं वृत्तान्तः तदत्रजन्तु भवन्तः इत्युक्त्वा तूष्णीमभवत् ।

मुहूर्तादिव चोत्थाय तेषु तेषु रम्यतरेषु तरुतलेषु लतागृहे सरस्तीरेषु तस्मिंश्च देवायतने किमपि नष्टमिवान्विष्यन्ननन्यदृष्टि बभ्राम । भ्रान्त्वा च चिरमिव खिन्नान्तरात्मा सनिर्वेदमूर्ध्वं निश्वस् तस्मिँल्लतागहने पुनरुपविश्य तस्थौ । वयमपि कृतवीरुत्सं धानास्तत्प्रतिबोधनप्रत्याशया स्थिता एव । गतवति समधि इव यामद्वये शरीरस्थितिकरणायास्माभिरभ्यर्थितः प्रत्युवाच वयस्यचन्द्रापीडस्य खल्वमी स्वजीवितादपि वल्लभतराः प्राणाः तद्यदि बलादपि परित्यज्य मां गच्छन्ति तथाप्येषां संधार मया प्रयत्नः कार्यः । किं पुनरगच्छतामेव । चन्द्रापीडदर्शनेन चाहमर्थी न मृत्युना । तदभ्यर्थनैवात्र निष्फला । इत्यभिधाय त्थाय स्नात्वा कन्दमूलफलैर्वनवासोचितां शरीरस्थितिमकरोत् निर्वर्तितशरीरस्थितौ तस्मिन्वयमपि कृतवन्तः । अनेनैव क्रमेण विस्मितान्तरात्मानो रात्रौ च दिवा च किमेतदि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तद्वृत्तान्तमेवानुभावयन्तो दिनत्रयं स्थित्वा निष्प्रत्याशास्तदागमनानयनयोः सुकृतजलसंविधानं तत्परिकरं तत्र स्थापयित्वा चागता वयम् । यच्चाग्रतो न प्रेषितः संवादकस्तदेकं तावदन्तरा गच्छतो देवस्यासौ न परापतत्येव । अपरमपि चिरात्प्रविष्टमात्रस्यैव देवस्य मा पुनरागमनक्लेशोऽभूदिति ।

चन्द्रापीडस्य तु तं स्वप्नेऽप्यनुत्प्रेक्षणीयं वैशम्पायनवृत्तान्तमाकर्ण्य युगपदुद्वेगविस्मयाभ्यामाक्रान्तहृदयस्योदपादि चेतसि । किं पुनरीदृशस्य सर्वपरित्यागकारिणो वनवासैकशरणस्य वैराग्यस्य कारणं भवेत् । स्वीयं च न पश्यामि किंचित्स्खलितम् । तातप्रसादात्ते मामिव तमपि चरणतललुठितचूडामणयोऽर्चयन्त्येव राजानः । ममेव तस्यापि चेच्छाधिकेषु सर्वोपभोगेषु न किंचिदपि हीयते । ममेव तस्याप्याज्ञा न विहन्यत एव । अहमिव सोऽपि प्रसादान्करोत्येव । मत्त इव तस्मादपि बिभेत्येवापराधिजनः मयीव तस्मिन्नपि सर्वाः संपदः । तमप्यालोक्य मामिवोत्पद्यते स्पृहा लोकस्य । अथागच्छंस्तातेनाम्बया चार्यशुकनासेन मनोरमया च तनयस्नेहोचितेन सौहार्देन न संभावितः विनयाधिक्येच्छुना तातेन शुकनासेन वा किंचित्पीडाकरमभिहितं ताडितो वा तत्रापि नैवासावेवं पिशुनस्वभावो वा गुरुजनाभक्तो वा गुणोपादानविमुखो वा तरलचित्तो वा यत्किंचनकारी यःकश्चिदिव क्षुद्रप्रकृतिराढ्यपुत्रतागर्वितो दुःशिक्षितो दुर्विनीतो वा पुत्रैकतादुर्ललितो वा यो जन्मनः प्रभृति सर्वप्रकारोपकारिणो गुरुजनस्योपरि खेदमेवं कुर्यादनुबन्धाद्विरमेद्वा । प्रशमस्यापीदृशस्य नैष कालः । अद्याप्यसौ विद्वज्जनोचिते गार्हस्थ्य एव न निवेशितो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



देवपितृमनुष्याणामानृण्यमेव नोपगतः । अगत्वा चानृण्यमु मृणत्रयेण बद्धः क्व गतः । न तेन पुत्रपौत्रसंतत्या वंशः प्रतिष्ठा नीतः । नानन्तदक्षिणैर्महाक्रतुभिरिष्टम् । न सत्रकूपप्रपाप्रासाद तडागारामादिभिरापूर्तैः कीर्तनैरलङ्कृता मेदिनी । नाकल्पस्थायि दिशोयायि यशो विप्रकीर्णम् । न गुरवोऽनुवृत्त्या सु स्थापिताः । न स्निग्धबन्धूनामुपकृतम् । न प्रणयिनो निर्विशेष विभवतां नीताः । न साधवः परिवर्धिताः । नानुजीविनः सं भक्ताः । नाभ्यागताः कृता निस्तृषाः । न दृष्टाः श्रुता वाङ्गना न जातेन जीवलोकसुखान्यनुभूतानि । न तेन पुरुषार्थसाधना धर्मार्थकाममोक्षाणामेकोऽपि हि प्राप्तः । किमेतत्तेन कृतम् इत्याक्षिप्तचेताश्चिन्तयंस्तस्मिन्नेव तरुतले स्थित्वा शून्यहृदयो यथाक्रियमाणप्रसादसंमानसम्भावनासंभावितं विसर्ज्य सक मेव राजकमुत्थाय तत्क्षणकृतं कायमानमविशत् ।

प्रविश्य चागृहीप्रतिकर्मतया मलिनवेषाभिरुद्विग्नदीनमुखीभिः संता रितस्ततो वाराङ्गनाभिर्यामिकलोकेन कर्मान्तिकैश्च प्रणम्यमा स्तूष्णीमिवालोककारकेणेव मदामोदेनावेदिते निसृष्टशून्यग र्गन्धमादने शनैः शनैर्वासभवनमयासीत् । तत्र चापनीतस योगो विमुच्याङ्गानि शयनीये तरुतालवृन्तानिलेन वीज्यमानोऽ संवाहकारिभिश्च शनैः शनैरपनीयमानागमनखेदः सकलरज प्रजागरखिन्नोऽपि चाप्राप्तनिद्रासुखो दुःखासिकया पुन दुःखान्तरहेतुं चिंतामेवाविशत् । यदि तावदप्रतिमुक्तस्तातेनाम्ब वा महति शोकार्णवे निक्षिप्य तौ तनयविरहशोकविक्लवं शुकनासमम्बां च मनोरमामनाश्वास्यास्मादेव प्रदेशाद्गच्छ तदा मयापि वैशम्पायनस्यानुकृतं भवति । निवृत्य पुन

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तृष्णामुक्तिपक्षमाशङ्कते मे हृदयम् । तत्किं करोमि । अथवास्थान प्रतिबन्धाप्रतिमुक्तिशङ्का मे । प्रियसुहृदात्मानं मां च परित्यजताप्यपरेण प्रसादकारेण गमनमप्युत्पादयता कादम्बरीसमीपगमनोपायचिन्ता-पर्याकुलमतेरुपकृतमेव । तदधुना वैशम्पायनप्रत्यानयनाय यान्तं न तातो नाम्नापि नार्यशुकनासोऽपि निवारयितुं शक्नोति माम् । विशेषतश्च वैशम्पायनसहितस्तेनैव पार्श्वेनाग्रतो गमिष्यामि ।

इति निश्चित्य तत्कालकृतं वैशम्पायनवियोगदुःखं परिणाम-सुखमौषधमिव बहु मन्यमानो मुहूर्तमिव स्थित्वा विश्रान्तः सुखितैरङ्गैरापूरिते तृतीयार्धयामशंखे शरीरस्थितिकरणायोदतिष्ठत् । उत्थाय च यत्रैव कादम्बरी तत्रैव वैशम्पायन इति स्वधैर्यावष्टम्भेनैव संस्तभ्य हृदयं शून्यान्तरात्मा पुनरेव विसर्जितराजलोकः शरीरस्थितिमकरोत् । कृतहारश्चान्तर्ज्वलतो मदनानलस्य वैशम्पायनविरहशोकाग्नेश्च बहिरपि संतापदानाय साहायकमिव कर्तुमुपरिस्थितश्चातिकष्टमष्टास्वपि दिक्षु युगपत्प्रसारितकरः करोम्ययत्नेनैव संतापमित्याकलय्येव गगनतलमध्यमारूढे सवितर्युत्थाय सरस्तीरकल्पितं परिभवस्थानमिव निदाघसमयस्य प्रत्याघातमिव दिवसस्य जलमण्डपमयासीत् ।

तत्र चातिरम्यतया क्षुभितमकरध्वजोत्कलिकासहस्रविषमं जलासारशिशिरतया संधुक्षितसुहृद्वियोगौर्वानलं महासमुद्रमिव गम्भीरं तं दिवसमेकाकी कथमपि स्वधैर्ययानपात्रेणालङ्घयत् । लोहितायमानातपे च सायाह्ने निर्गत्य वासभवनाङ्गणे क्षणमिवास्थाने समासन्नपार्थिवैः सह वैशम्पायनालापेनैव स्थित्वा द्वितीय

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एव यामे चलितव्यं सज्जीकुरुत साधनमित्यादिश्य र्जिताशेषराजलोको वासभवनमध्यवसत् । अथातिचिरान् ज्जयिनीदर्शनोत्सुको विनापि प्रयाणनान्द्या सकल एव लोकः सज्जीभूय प्रावर्तत गन्तुम् । अथाध्वनैव क्षीणायां यामवत्यां विस्पष्टे प्रभातसमये परापतितवा यिनीम् ।

अथ दूरत एव प्रभृति नगरीनिर्गतैरार्त्या पृच्छ्यमानं मानं च विचार्यमाणं चानुभाव्यमानं च वैशम्पायनवृत्तान् समन्ताच्छुश्राव । शृण्वंश्च चकार चेतसि । बाह्यस्य ताव स्येयमीदृशी समवस्था । किं पुनर्येनासावङ्केन लालितः सं वा बालचाटवोऽस्यानुभूताः तदतिकष्टं मे वैश्यम्पायनेन तातस्य शुकनासस्याम्बाया मनोरमाया वा दर्शनम् । चिन्तयन्नासाग्रनिहितोद्बाष्पदृष्टिरदृष्टसर्ववृत्तान्त एव ज्जयिनीम् । अवतीर्य च स राजकुलद्वारि विशन्नेवा नासभवनं सह देव्या विलासवत्या गतो राजेति शु श्रुत्वा च निवृत्य तत्रैव जगाम । गच्छंश्च समीपवर्ती वत्स वैशम्पायनाद्यापि मदङ्कलालनोचितो बाल एवासि त्वमेकाकी व्यालशतसहस्रभीषणे निर्मानुषे तस्मिञ्शून् स्थितः केन ते तत्रापि सर्वसत्त्वव्याघातकारिणी श कृता । केन वैषम्यप्रतिपन्थिनी शरीरस्थितिः संपादिता निद्रासुखदायि शयनीयमुपकल्पितम् । कस्त्वयि बुभुक्षिते सुषुप्सति वा दुःखितः । ममोत्सङ्गमुत्सृज्य समानसु वधूरपि न पुत्रक त्वयोपात्ता । आगतमात्रस्यैव ते पितर वधूमुखमवलोकयिष्यामीति यन्मया चिन्तितं न

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मे मन्दपुण्याया न संपन्नमपरं तवापि वदनदर्शनं दुर्लभीतम् । वत्स यत्र तेऽवस्थातुमभिरुचितं नयस्व मामपि तत्रैव तरं विज्ञाप्य । त्वामपश्यन्ती न जीवामि । तात त्वयाहं शवेऽपि नावमानिता । कुतस्तवेयमेकपद एवदृशी निष्ठुरता ता । जन्मतः प्रभृति न दृष्टमेवं यस्य कुपितमाननं तस्य कुतोऽयमेवंविधो मय्यकस्मादेव कोपः । यदेवं परित्यज्य यतोऽसि । गतोऽप्यागच्छ । शिरसा प्रसादयामि त्वाम् । कोऽपरो- मे । देशान्तरपरिचयान्मुक्तो नामास्मासु स्नेहः । क्षणमनन्तरितदर्शनस्य चन्द्रापीडस्योपरि कथं तवेदृशी निःस्नेहता ता । तात न भद्रकं ते समापतितम् । सर्व एव सुखं स्थापयो गुरुजनो दुःखं स्थापितः । न जानाम्येवं कृत्वा किं त्वया लब्धव्यम् । एतानि चान्यानि चान्तर्भवनगतां प्रत्यग्रतनयविरहशोकविह्वलां स्वयं देव्या विलासवत्या संस्थाप्यमानामपि मनोरमां लपन्तीमश्रौषीत् ।

तेन चातिकरुणेन तत्प्रलापविषेण विह्वल इव निद्रागमेनेव र्णमानो निश्चेतनतामनीयत । कथं कथमपि सहजसत्त्वावष्टम्भेन संस्तम्भितात्मा प्रविश्य पितुरपि लज्जमानो वदनमुपदर्शयितुमधोमुख एव निस्पन्दसर्वाङ्गेण मन्दराद्रिणेव शुकनासेन हि मंथनावसानस्तिमितमिव महार्णवं प्रणम्य पितरं दूरत एवोपाविशत् । उपविष्टं च तं क्षणमिव दृष्ट्वा राजान्तर्बाष्पभरगद्गदध्वनिनाभ्यर्णवर्ष इव जलधरोऽभ्यधात् । वत्स चन्द्रापीड जानामि ते स्वजीवितादपि समभ्यधिकां भ्रातुरुपरि प्रीतिम् । पीडा च सुखैकहेतोर्वल्लभजनादेवासंभाव्या या समुत्पद्यते । तयैव न किंचिन्न क्रियते । तज्जन्मनः स्नेहस्य वयसः शीलस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


श्रुतस्य गुरुजनानुशासनस्य विनयाधानस्य च सर्वस्यैवानु मिमं भ्रातुः सुहृदश्च ते वृत्तान्तमाकर्ण्य त्वद्दोषमाशङ्कते मे हृ इत्येवंवादिनो नरपतेराक्षिप्य वचनं युगपच्छोकामर्ष मन्धकारिताननः प्रावृडारम्भ इव तडिल्लतादुष्प्रेक्ष्यो विस्फूर्जि स्फुरिताधरेण शुकनासोऽब्रवीत् ।

देव यदि चन्द्रमस्युष्मा दहने वा शीतलत्वमंशुमा वा तमस्तमस्विन्यां वा दिवसो महोदन्वति वा शोषः रधारणं वा शेषे परार्थानुद्यमो वा साधोरप्रियवचननिर्गमो सज्जनमुखात्संभाव्यते ततो युवराजेऽपि दोषः । तत्किमेवं निरूप्य तस्यानात्मज्ञस्य मूढप्रकृतेर्दुर्जातस्य राजपथ्यका मातृपितृघातिनो मित्रद्रुहः कृतघ्नस्य कर्मचाण्डालस्य पातकिनः कृते कृतयुगावतारयोग्यमात्मनोपि गुणवन्तमत्यु चरितं चन्द्रापीडमेवं संभावयति देवः । नह्यतःपरं परं किंचिदपि पीडाकारणं यद्गुणेषु वर्तमानो दोषेषु संभाव्यते जनेनापि । किं पुनर्गुरुजनेन । यो गुणी गुणैरेवावबोधनी कस्यापरस्यात्मा गुणवाननेन ज्ञापनीयः । अपि च प्रभृति देवस्य विलासवत्या देव्याश्चाङ्कलालनया यो न गृहीत मरुत इव दुर्ग्रहप्रकृतेश्चन्द्रापीडोऽपि किं करोतु । स्वयमेवं द्यन्त एवंविधाः शरीरसंभवा महाक्रमयः सर्वदोषाश्रया व्याधयोऽन्तर्विषा महाव्याला विनाशहेतवो महोत्पाता वृत्तयो महावातिका वक्रचारिणो महाग्रहास्तमोमयाः मलिनात्मकाः कुलपांसवो निस्नेहाः खला निर्लज्जाः निःसंज्ञाः पशवः । येषां क्षुद्राणां प्रज्ञा पराभिसंधानाय

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


नुष्ठानाय । श्रुतमालापाय नोपशमाय । पराक्रमः प्राणिनामुपघाताय परोपकारायोत्साहो धनार्जनाय न यशसे । स्थैर्यं व्यसनासङ्गाय न चिरसंगताय । धनपरित्यागः कामाय न धर्माय । किं बहुना सर्वमेव येषां दोषाय न गुणाय । तदसावपीदृश एव कोऽप्यपुण्यवानुत्पन्नो यस्यैवं कुर्वतो मित्रमहं चन्द्रापीडस्य कथं तस्य द्रोहमाचरामीति नोत्पन्नं चेतसि । एवं कृते चलितवृत्तानां शासितावश्यं तारापीडो देवः पीडितान्तरात्मा मयि कोपं करिष्यतीत्येवमपि नाशङ्कितं मनसा । मातुरहमेवैको जीवितनिबंधनं कथं मया विना वर्तिष्यत इत्येतस्य नृशंसस्य हृदये नापतितम् । पिण्डप्रदो वंशसन्तानार्थमहमुत्पादितः पित्रा कथमहमननुज्ञातस्तेन सर्वपरित्यागं करोमीत्येतदपि यथाजातस्य न बुद्धौ संजातम् । सर्व एव ह्यनाक्षिप्तचेताः स्वहिताय परहिताय वा प्रवर्तते तस्य तु पुनरस्मानेवं दुःखे स्थापयतो न स्वहितं न परहितमपि । किमनेनैवमात्मद्रुहा कृतमिति मतिरेव तावन्न बोधपदवीमवतरति । सर्वथा दुःखायैवास्माकं तस्य पापकर्मणो ग्रहोपसृष्टस्य जन्म । इत्युक्त्वा हेमन्तकालोत्पलिनीमिवोद्बाष्पां दृष्टिमुदवहत् । उद्वेपिताधरश्च बहिरलब्धनिर्गमेण स्फुटन्निवान्तर्मन्युपूरेण निश्वसन्नेवावतस्थे ।

तदवस्थं च तं तारापीडः प्रत्युवाच । एतत्खलु प्रदीपेनाग्नेः प्रकाशनं वासरालोकेन भास्वतः समुद्भासनमवश्यायलेशैराल्हादनममृतांशोर्मेघाम्बुबिन्दुभिरापूरणं पयोधेर्व्यजनानिलैरभिवर्धनं प्रभञ्जनस्य यदस्मद्विधैः परिबोधनमार्यस्य । तथापि प्राज्ञस्यापि बहुश्रुतस्यापि विवेकिनोऽपि धीरस्यापि सत्त्ववतोऽप्यवश्यं दुःखातिपातेन विशुद्धमपि वर्षसलिलेन सर इव मानसं कलुषी-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्रियते सर्वस्य । कलुषीकृते च मानसे किमिदमिति दर्शनं नश्यति । न चित्तमालोचयति । न बुद्धिर्बुध्यते विवेकोऽपि विविनक्ति । येन ब्रवीमि । अन्यदस्मत्तो मार्य एव सुतरां वेत्ति । किमस्ति कश्चिदसावियति यस्य निर्विकारं यौवनमतिक्रान्तम् । यौवनावतारे हि नैव सह गलति गुरुजनस्नेहः । वयसैव सहारोहति प्रीतिः । वक्षसैव विस्तीर्यते वाञ्छा । बलेनैव सहोपचीयते दोर्द्वयेनैव सह स्थूलतामापद्यते धीः । मध्येनैव सह मुपयाति श्रुतम् । ऊरुयुगलेनैव सहोपचीयते हृदयमविनीत श्मश्रुभिरेव सहोज्जृम्भते मलिनताहेतुर्मोहः । सहाविर्भवन्ति हृदयाद्विकाराः । तद्वैशम्पायनमुद्दिश्य कोप देवमतिपरुषमभिदधत्यार्ये महती मे चेतसः पीडा समु स्वयमारोपितेषु तरुषु तावदुत्पद्यते स्नेहः । किं पुनरङ्गसं पत्येषु । तदुत्सृज्यतामयममर्षवेगो वैशम्पायनस्योपरि । पकं तु तेन न किंचिदप्याचरितम् । सर्वपरित्यागं स्थित इत्येदापि कारणमविज्ञाय किमेवं दोषपक्षे निक्षि कदाचिद्गुणीभवत्येवमयमविनयनिष्पन्नो दोष एव । तावदसौ । बुध्यामहे किमर्थमयमेवंविधस्तस्य वयसोनु संवेग उत्पन्नः । ततो यथायुक्तं विधास्यामः ।

इत्युक्तवति तारापीडे पुनः शुकनासोऽभ्यधात् । तया वत्सलत्वाच्चेवमादिशति देवः । अन्यदतःपरं विरूपकं भवेद्यद्युवराजमुत्सृज्य क्षणमप्यन्यत्रावस्थानमात्म चेष्टितम् । इत्युक्तवति शुकनासे कशयेवान्तस्ताडितो संभावनयानया पितुरुद्बाष्पदृष्टिरुपविष्ट एवोपसृत्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


नैः शनैः शुकनासमवादीत् । आर्य यद्यपि निरुक्तितो वेद्मि मदीयेन दोषेण नागतो वैशम्पायन इति तथापि तातेन भावितमेव कस्य वापरस्य संभावना नोत्पन्ना । मिथ्यापि तथा यथा गृहीतं लोकेन विशेषतो गुरुणा । प्रसिद्धिरत्रायशसे शसे वा दोषगुणाश्रया फलति । परत्र फलदायी कुत्रोच्युयते परमार्थः । तदस्या दोषसंभावनायाः प्रायश्चित्तमार्यो पयतु मे वैशम्पायनानयनाय गमनाभ्यनुज्ञां तातेन । नान्यथा दोषशुद्धिर्भवति । किं कारणम् । अनागते तु वैशम्पायने विनातस्यानया संभावनया नापगन्तव्यम् । अगते च मयि वैशम्पायनेन नागन्तव्यम् । यद्यसावन्येनानेतुमेव पार्येत तदा तातयाप्यनुल्लङ्घनीयवचनैरेभिरवनिपतिसहस्रैरानीत एव स्यात् । दार्यः कारयतु गमनाभ्यनुज्ञया प्रसादम् । न च तुरंगमैर्गच्छतो दृष्टायां भूमौ स्वल्पोऽपि गमनपरिक्लेशः । वैशम्पायनमादागतमेव मामवधारयत्वार्यः । अपि च बाह्यखेदादसह्योऽन्तःखेद एव मे तद्वियोगजन्मा । अनुपदमेव स्कन्धावारमादायाच्छतीत्यमुना हेतुना विना तेनागतोऽहम् । अन्यथा जन्मनः प्रभृति कदा मया गतं स्थितं क्रीडितं हसितमशितं सुप्तं प्रबुद्धमुच्छ्वसितं वा विना वैशम्पायनेन । यच्च श्रुत्वा तस्मादेव प्रदेशान्न गतोऽस्मि तन्मा तेनैव तुल्योऽभूवमिति । तदप्रतिगमनदोषाद्रक्षतु मामार्यः ।

इत्यभिहितवति चन्द्रापीडेऽन्तःपीडोपरागरक्ते रक्ततामरसानुकारिणि मुखे सपक्षपातां षट्पदावलीमिव दृष्टिं निवेश्यैव गमनाय विज्ञापयति युवराजः किमाज्ञापयति देव इति शनैः शनैः शुकनासो राजानमप्राक्षीत् । तथा पृष्टश्च शुकनासेन किं-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



चिदिव ध्यात्वा तारापीडः प्रत्यवादीत् । आर्य मया ज्ञात ष्वेव दिवसेषु संपूर्णमण्डलस्येन्दोर्ज्योत्स्नामिव करावल वत्सस्य वधूं द्रक्ष्यामीति यावदयमपरोऽन्तर्हिताशापथो ज काल इव प्रत्यूहकारी वैशम्पायनवृत्तान्तो दुष्प्रकृतिना त्रान्तरा पातितः यथा चायुष्मताभिहितमेवैतत् । न तम शक्नोत्यानेतुम् । न च तेन विनायमत्र स्थातुम् । तदवश्य तावन्निस्तरितव्यो व्यसनार्णवोऽमुना पोतेन । वैशम्पायनप्रत्यानय चावश्यं देव्यपि विलासवती विसर्जयिष्यत्येवैनमितिनिश्चयो तद्यातु । किंत्वतिदूरं वत्सेन गन्तव्यम् । तद्गणकैः सहादरादार्यो दि लग्नं च गमनायास्य निरूपयतु संविधानं च कारयतु एतदभिधाय शुकनासमुद्बाष्पलोचनश्चिरमिव चन्द्रापीडमालो हूय च विनयावनम्रमंसदेशे शिरसि बाह्वोश्च पाणिना स्पृश दिशत् । वत्स गच्छ त्वमेव प्रविश्याभ्यन्तरं मनोरमासहि मातुरावेदयात्मगमनवृत्तान्तम् । इत्यादिश्य चन्द्रापीडमा शुकनासमादाय स्वभवनमयासीत् । चन्द्रापीडस्तु तामक्लिष्ट कादम्बरीवरणस्रजमिव गमनाभ्यनुज्ञां हृदयेनोद्वहन्प्रहृष्ट त्माप्यपहर्षदृष्टिः प्रविश्य कृतनमस्कारो मातुः समीपे समुपवि त्मदर्शनाद्द्विगुणीभूतवैशम्पायनविरहशोकविह्वलां मनो माश्वास्यावादीत् ।

अम्ब समाश्वसिहि । वैशम्पायनानयनाय तातेन मे ग मादिष्टम् । तत्कतिपयदिवसान्तरितं वैशम्पायनाननदर्शनो मामविकल्पं विसर्जय त्वम् । सात्वेवमभिहिता प्रत्युवा तात किमात्मगमनवचसा मां समाश्वासयसि । कः खलु त्वयि तस्मिंश्च विशेषः । तदेकधा तमेकं न पश्यामि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


हृदयम् । त्वयि पुनर्गते यदपि तस्यादर्शने जीवितप्रतिबन्धहेतुभूतं त्वद्दर्शनं तदपि दूरीभवति । तन्न गन्तव्यं वत्सेन । एकेनापि हि पुत्रेणावां पुत्रवत्यौ । अपि नागतो नामासौ निष्ठुरात्मा । इत्युक्तवत्यां मनोरमायां विलासवती धीरमुवाच । प्रियसखि तव मम चैवमेतद्यथा त्वयोक्तम् । अयं पुनर्वैशम्पायनेन विना कं पश्यतु । तदास्ताम् । किमेनं वारयसि । वारितेनाप्यनेन नैव स्थातव्यम् । मन्ये च पित्राप्ययमेतदेवाकलय्य गमनायानुमोदितः । तद्यातु । वरमावाभ्यां कतिपयदिवसाननयोरप्यदर्शनकृताः क्लेशा अनुभूता न पुनरस्य वैशम्पायनानवलोकनदुःखदीनं दिने दिने मुखमीक्षितम् । तदुत्तिष्ठ गच्छावो गमनसंविधानाय वत्सस्य चन्द्रापीडस्य ।

इत्यभिदधत्येव मनोरमां हस्ते गृहीत्वोत्थाय चन्द्रापीडेनानुगम्यमाना निजावासमयासीत् । चन्द्रापीडोऽपि मातुः समीपे गमनालापेनैव क्षणमिव स्थित्वा स्वगृहमगात् । तत्रापनीतसमायोगो गमनायोत्ताम्यता हृदयेन गणकानाहूय रहस्याज्ञापितवान् । यथा विना विलम्बेन मे गमनं भवति तथा भवद्भिरार्यशुकनासाय पृच्छते ताताय वा दिनमावेदनीयम् । इत्येवमादिष्टास्ते व्यज्ञापयन् । देव यथा सर्व एव ग्रहाः स्थितास्तथास्मन्मतेन देवस्य गमनमेव वर्तमाने न शस्यते । अपरमपि कर्मानुरोधाद्राजेच्छैव कालः । तत्र न कार्यमेवाहर्निरूपणया । राजा कालस्य कारणम् । यस्यामेव वेलायां चित्तनिर्वृतिः सैव वेला सर्वकार्येषु । इति विज्ञापिते मौहूर्तिकैः पुनस्तानब्रवीत् । तातेनैवमादिष्टमिति ब्रवीमि । अन्यदात्ययिकेषु कार्येषु कार्यपराणां प्रतिक्षणोत्पादिषु च दिवसनिरूपणैव कीदृशी । तत्तथा कथयि-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्यर्थं यथा श्व एव गमनं भवेदिति । देवः प्रमाणमित्य गतेषु च तेषु शरीरस्थितिकरणायोदतिष्ठत् । निर्वर्तितशरीर च मौहूर्तिकास्ते पुनः प्रविश्य शनैर्न्यवेदयन् । कृतोऽ दैवादेशः सिद्धश्च तनयविरहविक्लवतयार्यशुकनासस्य । त क्रान्ते श्वस्तनेऽहनि रात्रावितः प्रस्थातव्यं देवेन । इत्या तैः साधु कृतमिति तानभिष्टुत्य दृष्टिविषयवर्तिनीमेव का वैशम्पायनं च मन्यमानोऽप्रविष्टायामेव पत्रलेखायां प मीत्यग्रतः प्रधावितेनावधारयंश्चेतसानन्यकर्मा तं दिवसमे यामिनीं कथं कथमप्यस्थात् । अथास्तमुपगतवति तेजसां पत्यावुदयगिरिवर्तिनि नक्षत्र गमसुखमनुभवति भगवति नक्षत्रनायके विस्पष्टायां निशी प्रस्थानमङ्गले प्रणामायोपगतं चन्द्रापीडं पीडयान्तर्विलीय बाष्पोत्पीडमपारयन्ती वारयितुमत्यायताभ्याममि नेत्र कृतप्रयत्नाप्यमङ्गलशङ्कया विलासवती मन्युरागावेगग कोपरुध्यमानाक्षरमवादीत् । तात युज्यते ह्यङ्गला गर्भरूपस्य प्रथमगमने गरीयसी हृदयपीडा । मम पुन प्रथमगमनेऽपि ते पीडा समुत्पन्ना यादृशी तव गमनेना यतो दीर्यत इव मे हृदयम् । समुत्पाट्यन्त इव मर्माणि । श्यत इव शरीरम् । उत्प्लवत इव चेतः । विघटन्त इव बन्धनानि । निर्यान्तीव प्राणाः । न किंचित्समादधाति सर्वमेव शून्यं पश्यामि । न पारयाम्यात्मानमिव हृदयं तुम् । धृतोऽपि बलादागच्छति मे बाष्पोत्पीडः । मुहुर्मुहु हितापि मङ्गलसंपादनाय चलति मतिः । न जानाम्येव कि ष्यामीति । किन्निमित्तं चेयमीदृशी हृदयपीडेत्येत

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भि । किं बहुभ्यो दिवसेभ्यः कथमप्यागतो मे वत्सो टित्येव पुनर्गच्छतीति । किं वैशम्पायनवियोगादुद्विग्नस्य गमनकाकिनस्ते समुत्प्रेक्ष्येति । न पुनर्वैशम्पायनवृत्तान्तादात्मन एव खितयेति । न चैवंविधया पीडया वैशम्पायनानयनाय गच्छते गमनं निवारयितुं पारयति वाणी । हृदयं पुनर्नेच्छत्येव त्वदीयं मनम् । तदीदृशीं मे पीडां विज्ञाय यथा पुरा स्थितं न तथा चिदासङ्गमाबध्य दीर्घकालमायुष्मता स्थातव्यम् । अस्य चार्थस्य ते साञ्जलिबन्धेन शिरसाभ्यर्थये वत्सम् । इत्यादिशन्तीं मातरं सुदूरं प्रसारितावनम्रमूर्तिश्चन्द्रापीडो व्यज्ञपयत् । तस्तदा दिग्विजयप्रसङ्गात्स्थितोऽस्मि । अधुना पुनरियानेव मे लक्षेपो यावत्तमुद्देशं परापतामि । तत्पुनश्चिरागमनकृता नागपि न हृदये भावनीया त्वया पीडा। इत्येवं विज्ञप्ता चन्द्रापीन संनिरुध्य बाष्पवेगान्कथं कथमपि संस्तभ्यात्मानं निवर्तितमनमङ्गला गलता प्रस्रवेण सिञ्चन्ती शिरसि चोपाघ्राय गाढं चिरमालिङ्ग्य गच्छद्भिरिव प्राणैः कृच्छ्रान्मुमोच तं माता । मुक्तश्च मात्रा पितुः प्रणतये वासभवनमगमत् । तत्र च देव मनाय नमस्करोति युवराज इत्यावेदिते द्वाररक्षिणा प्रविश्य णीतलनिवेशितशिराः शयनवर्तिनो ननाम दूरस्थित एव पितुः पादौ । अथ तथाप्रणतमालोक्य किंचिदुन्नमितपूर्वकायः शयनगत एवाहूय तं पिता चक्षुषा पिबन्निव प्रेम्णा परिष्वज्य गाढमप्रौढ इव सहसोद्भूताविरलबाष्पपर्याकुलाक्षोऽन्तःक्षोभविक्षिप्ताक्षरमवादीत् । वत्स पित्राहं दोषेषु संभावित इत्येषा नागपि मनसि वत्सेन दुःखासिका न कार्या । विनयाधानाप्रभृति सम्यक्परीक्षितोऽस्यस्माभिः । परीक्ष्य च गुणगणैरेवाधिगम्यो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


राज्यभारस्त्वय्यारोपितो न तनयस्नेहादेव । संप्रति कामि न्भारमवक्षिप्याणुमपि दोषमाचरसि । त्वयैव सकललोक रञ्जने यतितव्यम् । गतः खलु कालोऽस्माकम् । अस्माभिर लितेनैव चिरं पदे स्थितम् । न पीडिताः प्रजा लोभेन । नोद्वे गुरवोऽवमानेन । न विमुखिताः सन्तो मदेन । नोत्रासि प्राणिनः क्रोधेन । न हासित आत्मा हर्षेण । न हतः परलो कामेनः । राजधर्मोऽनुरुद्धो न स्वरुचिः । वृद्धाः समासे न व्यसनानि । सतां चरितान्यनुवर्तितानि नेन्द्रियाणि धनुरुन्नामितं न मनः । वृत्तं रक्षितं न शरीरम् । वाच्याद्भीतं मरणात् । उपभुक्तानि सुरलोकेऽपि दुर्लभानि सर्वविषयोप सुखानि यौवनेच्छया पर्याप्तमकार्यपरिहारात् । कार्यानुष्ठा चोपर्जितः परोऽपि लोकः । इति चेतसि मे । त्वज्जन्मना कृतार्थ एवास्मि । तदयमेव मे मनोरथः । दारपरिग्रहात् ष्ठिते त्वयि सकलमेवेमं राज्यभारमारोप्य जन्मनिर्वाहल हृदयेन पूर्वराजर्षिगतं पन्थानमनुयास्यामीति अस्य च मे र्कित एवायमग्रतः प्रतिरोधको वैशम्पायनवृत्तान्तः स्थितः मन्ये च न संपत्तव्यमेवानेन । अन्यथा क्व वैशम्पायनः । चैवंविधमस्य स्वप्नेऽप्यसंभावनीयं समाचेष्टितम् । तद्गतेनापि कर्तव्यं वत्सेन यथा न चिरकालमेष मे मनोरथोऽन्तर्हृ एव विपरिवर्तते । इत्यभिधाय किंचिदुन्नामिते मुखे मुखं संपीडितं हृदयमिव ताम्बूलमर्पयित्वा व्यसर्जयत् ।

चन्द्रापीडस्तु तया पितुः संभावनया सुदूरमुन्नमितोऽप्यव म्रमूर्तिरपसृत्य पुनः प्रणामेनोन्नमितात्मा निर्ययौ । निर्ग च शुकनासभवनमयासीत् । तत्र च तनयचिन्तापरीतमुद्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मिवेन्द्रियैः शून्यशरीरं शुकनासमविरताश्रुपातोपहतमुखीं च मनोरमां प्रणम्य तादृशाभ्यामेव ताभ्यां संभाव्याशिषा समारोपयद्भ्यामिव स्वदुःखभारमनुगतो निवर्तनाय तयोर्निर्वर्तिताननो मुहुराद्वारनिर्गतेर्गत्वाग्रतो दीनमिन्द्रायुधमालोक्यापि पुनर्निवारणाशङ्कया वैशम्पायनावलोकनत्वरया कादम्बरीसमागमौत्सुक्येन चाकृतपरिलम्बो मनागप्यारुह्य रयेणैव निरागान्नगर्याः।

निर्गत्य च शिप्रातटे तत्प्रस्थानमङ्गलावस्थानायोपकल्पितं कायमानमप्रविश्य बहिरेव गतो युवराज इति जनितलोककलकलेनातर्किततत्कालगमनसंभ्रान्तेन परिजनेन राजपुत्रलोकेन चेतस्ततो धावतानुगम्यमानो गव्यूतित्रितयमिव गत्वा सुलभपयोयवसे प्रदेशे निवासमकल्पयत्। उत्ताम्यता हृदयेनाप्रभातायामेव यामिन्यामुत्थाय पुनरवहत्। वहंश्च तस्मादेव वासरादारभ्यैवमचेतित एव परापत्य कृतापक्रान्तेस्त्रपया पृष्ठतोऽनुगम्य बलाद्दत्तकण्ठग्रहः क्व परं पलायत इति वैशम्पायनस्य वैलक्ष्यमपनयाम्येवं तत्समागमसुखमनुभूय निष्कारणप्रसन्नामनघामतर्कितोपनतमद्वलोकेनोपजातहर्षविशेषां पुरस्ताद्गमनसिद्धये पुनर्महाश्वेतां पश्याम्येवं महाश्वेताश्रमसमीपे पुनः स्थापिताशेषतुरगसैन्यस्तया सहैव हेमकूटं गच्छाम्येवं तत्र मत्प्रत्यभिज्ञानसंभ्रमप्रधावितेनेतस्ततः कादम्बरीपरिजनेन प्रणम्यमानः प्रविश्य मदागमननिवेदनोत्फुल्लनयनसखीजनेनापह्रियमाणपूर्णपात्रामभ्युत्थानप्रसङ्गेनैव कुसुमशय्यां दूरीकुर्वतीं कादम्बरीमालोकयन्दर्शनीयावलोकनफलेन चक्षुषी कृतार्थतां नयाम्येवं मदलेखां साञ्जलिप्रणामेन कण्ठग्रहेण च संभाव्य चरणपतितां

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पत्रलेखां संभाव्य केयूरकं च पुनः परिष्वज्य निर्भरं महाश्वेतोपपादितोद्वाहमङ्गलस्त्वरितसखीवृन्दनिर्वर्तितवैवाहिकस्नान-मङ्गलविधेर्भुव इव वर्षाभिषिक्तायाः करग्रहणं निर्वर्तय-मीत्येतानि चान्यानि च चिन्तयन्नचेतितक्षुत्पिपासातपःश्रमो-गरव्यथो दिवारात्रौ चावहत् । एवं च वहतोऽप्यस्य दवीयस-ध्वनोऽर्धपथ एवाशुगमनविघ्नकारी बभूव जलदकालः । तत्र प्रथममस्य चेतनाहारिभिर्मूर्च्छावेगैरन्धकारमनीयन्त दश दिशः । अतोऽसौ न रात्रौ न दिवा न ग्रामे नारण्ये नान्तर्न बहिर्न क-नोपपने न वर्त्मनि नावासे व वहन्न तिष्ठन्न वैशम्पायनस्मरणे कादम्बरीसमागमानुध्याने न कथंचिदपि न क्वचिदपि निर्वृति-मेवाध्यगच्छत् । अनधिगतनिर्वृतिर्जीवितसंधारणाय यथा त-निर्वर्तिताशनमात्रकोऽभ्यर्हितराजलोकवचसाप्यप्रतिपन्नशरीरसंस्का-दिवसमवहदेव केवलम् ।

वहंश्च त्रिभागमात्रावशिष्टेऽध्वनि वर्तमानं मेघनादमद्राक्षीत् तिष्ठतु तावत्पुरस्तात्पत्रलेखागमनवृत्तान्तप्रश्नः । वैशम्पाय-वृत्तान्तमेव तावत्पृच्छामि । अपि दृष्टस्त्वयाच्छोदसरसि वैशम्पा-यनः । पृष्टश्चावस्थानकारणम् । पृष्टेन वा किंचित्कथितं न वा । पश्चात्तापी वास्मत्परित्यागेन । स्मरति वास्माकम् । पृष्टोऽ-वानेन किंचिन्मदीयम् । उत्पन्नो वालापो युवयोः । उपलब्धो वाभिप्रायः । मातापित्रोर्वा संदिष्टं किंचित् । परिबोधितो त्वयागमनाय । आवेदितं वास्मदीयमागमनम् । नापयास्यति वा तस्मात्प्रदेशात् । दास्यति वा दर्शनम् । ग्रहीष्यति वा दनुनयनम् । आगमिष्यति वा पुनर्मया सह । किं कुर्वन्दिवा-मास्ते । को वा विनोदोऽस्य तिष्ठतीति । स त्वेवं पृष्टो व्यजिज्ञ

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पत् । देव देवेन तु वैशम्पायनमालोक्यानुपदमेव तुरंगमैरागन्तव्यमेवाहमित्यादिश्य विसर्जितोऽहम् । अच्छोदसरसः प्रतीपं वैशम्पायनो गत इत्येषान्तरा वार्तैव नोपजाता । चिरयति च देवे जलदसमयारम्भमालोक्य कदाचिदेषु दिवसेषु देवेन तारापीडेन देव्या विलासवत्यार्यशुकनासेन च कृतप्रयत्नोऽपि न मुच्यत एवागन्तुं देवश्चन्द्रापीडस्त्वया चैकाकिना न स्थातव्यमेवास्यां भूमौ परागतप्रायाश्च वयं तन्निवर्तस्वास्मादेव प्रदेशादित्यभिधाय पत्रलेखया केयूरकेण च त्रिचतुरैः प्रयाणकैरप्राप्त एवाच्छोदं यावद्बलान्निवर्तितोऽस्मि । इत्येवमावेद्य विरराम । विरतवचनं च तं पुनरपृच्छत् । किमाकलयस्यद्यतनेनाह्ना यावत्परापतिता पत्रलेखा नेति । स तु व्यजिज्ञपत् । देव यद्यन्तरा कश्चिदन्तरायो न भविष्यति विलम्बकारी तदा विना संदेहेन परापतत्येवमवगच्छति मे हृदयम् । इत्युक्तवति मेघनादे तदेवाच्छोदमुपाहितद्विगुणदुःखमाससाद ।

आसाद्य चोपसर्पन्नेव सर्वानश्ववारानादिदेश । कदाचिदसौ वैलक्ष्यादस्मानालोक्यापसर्पत्येव । तच्चतुर्ष्वपि पार्श्वेष्ववहिता भवन्तु भवन्त इति । आत्मनापि तुरगगत एव खिन्नोऽप्यखिन्न इव विचिन्वल्लँतागहनानि तरुमूलानि शिलातलानि लतामण्डपांश्च समंताद्बभ्राम । भ्राम्यंश्च यदा न क्वचिदपि किंचिदवस्थानचिन्हमप्यद्राक्षीत्तदा चकार चेतसि । नियतमसौ पत्रलेखासकाशान्मदागमनमुपलभ्य प्रथममेवापक्रान्तो येनावस्थानचिन्हमात्रकमपि नोपलक्ष्यते । निरुद्देशं गतश्च क्वाप्यस्माभिरेवमन्विष्टोपि न दृष्टः । तत्कष्टतममापतितम् । वैशम्पायनमदृष्ट्वास्मात्प्रदेशात्पदमपि गन्तुं पादावेव नोत्सहेते मे । मन्मथशर-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


विक्षिप्ताश्च कादम्बरीदर्शनमात्रकावलम्बनाः क्षणमपि विल
न्तरीकर्तुमक्षमाः क्षामतयामी प्राणाः । सर्वथा विनष्टोऽस्मि
न दृष्टा कादम्बरी देवी । नापि वैशम्पायनः । इत्येवमु
निश्चयोऽप्यपरिच्छेद्यस्वभावत्वात्प्रत्याशायाः कदाचिदस्य
न्तस्याभिज्ञा महाश्वेतापि भवत्येव तत्तां तावत्पश्यामि
यथा युक्तं प्रतिपत्स्ये । इत्यारोप्य हृदये तदाश्रमस्यैव ना
निवेशिततुरगसैन्यः समायोगमपनीय सर्पनिर्मोकपरि
घनोज्झितज्योत्स्नाभिरामे परिधाय वाससी तथास्थितपर्याणं
न्द्रायुधमारुह्य महाश्वेताश्रममुपजगाम । तत्र च प्रविशन्नेवाव
महाश्वेतावलोकनकुतूहलात्पश्चादाकृष्टेनेन्द्रायुधेन परि
राजपुत्रैश्चानुगम्यमानो विवेश । प्रविश्य च गुहाद्वार
शिलातले समुपविष्टामधोमुखीमसह्यमन्युवेगोत्कम्पितसर्वा
मनवरतनयनजलवर्षिणीमुच्चण्डवर्षवाताहतलतामिवोद्बाष्पदीनदृ
कथंकथमपि तरलिकया विधृतशरीरां महाश्वेतामपश्य
दृष्ट्वा च तां नताक्षीमस्योदपादि हृदये । मा नाम दे
कादम्बर्या एव किमप्यनिष्टमुत्पन्नं भवेत् । येनेयम
समवस्था हर्षहेतावपि मदागमनेनानुभूयते महाश्वेतया
इत्याशङ्काभिन्नहृदय उड्डीनैरेव प्राणैः पदे पदे स्खल
पतन्निव मुह्यन्निवोपसृत्योपविश्य च तस्यैव शिलातल
देशे प्रोद्बाष्पविषण्णवदनः किमेतदिति तरलिकामपृच्छत् । सा
तदवस्थाया अपि महाश्वेताया एव मुखमवलोकितवती ।

अथानुपसंहृतमन्युवेगापि गद्गदिकावगृह्यमाणकण्ठा म
श्वेतैव प्रत्यवादीत् । महाभाग किमपि नावेदयते वराकी ।
दुःखाभिघातैककठिनहृदयया पुनरप्यदुःखश्रवणार्होऽप्यात्मीय

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ावितः सैवाहं मन्दभाग्या महाभाग जीवितव्यसनिनी निर्लज्जा निर्घृणा च दुःश्रवणमपि श्रावयामि दुःखमिदम् । श्रूयताम् । यूरकाद्भवद्गमनमाकर्ण्य विदीर्णमानसा न मया चित्ररथस्य नोरथः पूरितो न मदिरायाः प्रार्थना कृतार्थिता नात्मनः मीहितं संपादितं न गृहात्प्रत्यागतस्य चन्द्रापीडस्य प्रियमनुष्ठितं न चापि हृदयवल्लभसमागमनिर्वृता प्रियसखी कादम्बरी ीक्षितेत्युत्पन्नानेकगुणवैराग्या गाढबन्धान्कादम्बरीस्नेहपाशापि भित्त्वा पुनः कष्टतरतपश्चरणायात्रैवायाता यावदत्र महाागस्यैव तुल्याकृतिमुन्मुक्तमिवान्तःकरणेन शून्यशरीरमुत्तरलुखमुत्प्लुतावबद्धलक्ष्यशून्यया दृष्ट्या प्रनष्टमिव किमपीतस्ततो ोलोकयन्तं ब्राह्मणयुवानमपश्यम् । स तु मामुपसृत्यानन्यदृष्टिदृष्टपूर्वोऽपि प्रत्यभिजानन्निवासंस्तुतोऽपि परिचित इवासंभावितोऽयुपारूढप्रौढप्रणय इवास्निग्धोऽपि परवानिव दुःखिताकारोऽपि ुखायमान इव तूष्णीं स्थितोऽपि प्रार्थयमान इवापृष्टोप्यावेदयन्निवात्मीयामवस्थामभिनन्दन्निवानुशोचन्निव दृष्यन्निव विषीदन्निव बिभ्यदिवाभिभवन्निव भीत इवाकाङ्क्षन्निवानुस्मरन्निव केमपि विस्मृतनिमेषेण चक्षुषा मत्त इवाविष्ट इव नियुक्त इवापिबन्निवाकर्षयन्निवान्तर्विशन्निव सुचिरमालोक्याब्रवीत् । सुतनु सर्व एव हि जगति जन्मनो वयसाकृतेर्वा सदृशाचरन्न वचनयितामेति । तव पुनरेकान्तवामप्रकृतेर्विधेरिव विसदृशानुष्ठाने कोऽयं प्रयत्नः । यदियमक्लिष्टमालतीकुसुमसुकुमारा मालेव कण्ठप्रणयैकयोग्या तनुरनुचितेनामुना कष्टतमेन तपश्चरणपरिक्लेशेन म्लानिमुपनीयते । किन्न रूपवयसोरनुरूपेण सुमनोहारिणी लतेव रसाश्रयिणा फलेन संयोज्यते । जातस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हि रूपगुणविहीनस्यापि जन्मोपनतानि जीवलोकसुखान्यनु शोभते परत्र संबन्धी तपश्चरणपरिक्लेशः । किं पुनराकृति जनस्य । तद्दुःखयति मामस्यास्ते स्वभावसरसायास्तनोर्मृणालि इव तुहिनपातस्तपःपरिक्लेशः । यदि च त्वादृशी जीव सुखेभ्यः पराङ्मुखी तपसा क्लेशयत्यात्मानं तदा वृथा धनुरधिज्यं कुसुमकार्मुकः । निष्कारणमुदेति चन्द्रमाः वसन्तमासस्यागमः । निष्फलानि कुमुदकुवलयकल्हारक करविकसितानि । निष्प्रयोजनो जलदसमयारम्भडंबर निरर्थकान्युपवनानि । किं वा ज्योत्स्नया । किं वा लीला त्पुलिनैर्मयानिलेन वेति ।

अहं तु देवस्य पुण्डरीकस्यैव वृत्तान्तादपेतकौतुका तथा वदन्तमपि कस्त्वं कुतो वा समायातः किमर्थं वा वमभिदधासीत्यपृष्ट्वैवान्यतोऽगच्छम् । गत्वा च देवतार्चनकु न्युच्चिन्वतीं तरलिकामाहूयाब्रवम् । तरलिके कोऽयं युवा ब्राह्म कृतिः कोऽप्यस्य विलोकयतो वदतश्चान्यादृश एवाभिप्रायो पलक्षितः । तन्निवार्यतामयं यथा पुनरत्र नागच्छति । निवारितो यद्यागमिष्यति तदावश्यमस्यवाभद्रकं भविष्यतीति स तु निवार्यमाणोऽपि दुर्निवार्यवृत्तेर्मदनहतकस्य दोषै व्यतया वानर्थस्य नात्याक्षीदेवानुबन्धम् । अतीतेषु केषुचि सेष्वेकदा गाढायां रजन्यामुद्गिरत्स्विव भरेणोद्दीपितं स्मर ज्योत्स्नापूरमिन्दुमयूखेषु लब्धनिद्रायां तरलिकायामनव निद्रासुखा संतापान्निर्गत्यास्मिन्नेव शिलातले विमुक्ताङ्गी कल्ह सुगन्धिना मन्दमन्देनाच्छोदानिलेनावीज्यमाना चन्द्र निहितदृष्टिरपि नामायमेभिरमृतवर्षिभिरखिलजगदाल्हादकारि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



चन्द्रमास्तमपि हृदयवल्लभं मे वर्षेदित्याशंसाप्रसङ्गेन देवस्य सुगृहीतनाम्नः पुण्डरीकस्य स्मरन्ती कथमभाग्यैर्मे मन्दभाग्यायास्तादृशस्यापि दिव्याकृतेर्महापुरुषस्य नभसोऽवतीर्णस्य भाषितमलीकमुपजातं जातानुकम्पेन वा यथा कथंचिज्जीवतु जीवितप्रिया तपस्विनीत्येवमेव समाश्वासितास्मि येन पुनर्दर्शनमेवानेन मे न दत्तं किं करोतु देवः सुगृहीतनामा पुण्डरीको यः रासुरेवोत्क्षिप्य नीतः कपिञ्जलस्तु जीवन्गतः कथमियता कालेन निष्करुणेन तेनापि वार्तापि मे न संपादितेत्येतानि चान्यान्यालापजालानि दुर्जीवितगृहीता जाग्रत्येवातिष्ठम् ।

अथ निभृतपदसंचरणमाचरणादुत्कण्टकितमनवरतपतितमदनशरशल्यनिकरनिचितमिव शरीरमुद्वहन्तं न युक्तमेव ते परहृदयमविज्ञायोपगन्तुमिति पदे पदे निवार्यमाणमिव गुरुणोरुस्तम्भेन दूरत एव मदालिङ्गनालीकाशया प्रसारितभुजयुगलमुत्कलिकासहस्रविषममाविष्टमिव मत्तमिवोन्मादादापतन्तं दूरतोऽपि दिवसनिर्विशेषेण चन्द्रातपेन विभाव्यमानं तमेव युवानमद्राक्षम् ।

दृष्ट्वा च तं तादृशं निस्पृहाप्यात्मनि परं भयमुपगतवती तस्यकरवम् । अहो कष्टतरमापतितम् । यद्ययमेवमुन्मादादागत्य पाणिनापि स्पृशति मां तदा मयेदमपुण्यहतकं शरीरमुत्स्रष्टव्यम् । तच्चिराद्देवस्य पुण्डरीकस्य पुनर्दर्शनप्रत्याशया दुःखोत्तरमप्यङ्गीकृतं व्यर्थतां मे यातं प्राणसंधारणमिति । स त्वेवं चिन्तयन्तीमेव मामुपसृत्याब्रवीत् । चन्द्रमुखि हन्तुमुद्यतो मामयं कुसुमशरसहायश्चन्द्रमाः । तच्छरणमागतोऽस्मि । रक्ष मामशरणमनाथमार्तमप्रतीकारक्षममात्मना त्वदायत्तजीवितम् । शरणागतपरित्राणं हि तपस्विनामपि धर्म एव । तद्यदि मामात्मप्रदानेन



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


नात्र संभावयसि तदा हतोऽहमाभ्यां कुसुमशिशिरकिरणा मिति । अहं तु तदाकर्ण्य झगित्युत्तमाङ्गनिर्गतज्वालेव रोषा निर्दहन्तीव तमुन्मिषद्बाष्पस्फुलिङ्गया दृष्ट्या तदा तर्ज वापादतलादुत्कम्पितगात्रयष्टिराविष्टेवात्मानमप्यचेतयमाना क्रू वेगरूक्षाक्षरमवदम् । आः पाप कथमेवं गदतो नामुत्त न ते निपतितं वज्रमवशीर्णा वा सहस्रधा न जिह्वा विह्व गता वा न वाणी नष्टानि वा नाक्षराणि । मन्ये च न सन्त्य तेऽस्मिञ्छरीरे सकललोकशुभाशुभसाक्षिभूतानि पञ्चमहाभूतानि येनैवं वदन्नाग्निना भस्मीकृतोऽसि न वायुनापहृतोऽसि न प प्लावितोऽसि न धरित्र्या रसातलं प्रवेशितोऽसि नापि तत्क्षणमा काशेनात्मनिर्विशेषतां नीतोऽसि । अव्यवस्थितो व्यवस्थि स्मिँल्लोकत्रये कुतस्त्वमुत्पन्न एवंविधः । यस्तिर्यग्जाति कामचारी न किंचिदपि वेत्सि । येनैव खलु हतविधिना स दर्शितवदनरागः स्वपक्षपातमात्रप्रवृत्तिरनिरूपितस्यानास्थान शुक इव वक्तुमेवं शिक्षितस्तेनैव किमिति तस्यामेव जातौ क्षिप्तोऽसि । तेनैकान्तहासहेतुरेवं वदन्नपि न क्रोधमुत्पादि नसि । त्वदुक्ते दुःखिताहं संविभागमिमं करोमि येनात्मव नुरूपां जातिमापन्नो नैवास्मद्विधाः कामयसे । इत्युक्त्वा च भिमुखी भूत्वा कृताञ्जलिः पुनरवदम् । भगवन्परमेश्वर स भुवनचूडामणे लोकपाल यदि मया देवस्य पुण्डरीकस्य द त्प्रभृति मनसाप्यपरः पुमान्न चिन्तितस्तदानेन मे सत्यवच यमलीककामी मदुदीरितायामेव जातौ पतत्विति । स च चनान्तरमेव न वेद्मि किमसह्यवृत्तेर्मदनज्वरस्य वेग सद्यो विपाकस्यात्मनो दुष्कृतस्य गौरवादाहोस्विन्मद्वचस

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सामर्थ्याद्दाच्छिन्नमूलस्तरुरिवाचेतनः क्षितावपतत् । अतिक्रान्तजीविते तस्मिन्कृताक्रन्दात्तत्परिजनतः श्रुतं यथासौ महाभागस्यैव मित्रं भवति । इत्युक्त्वा च त्रपावनम्रमुखी महीं महीयसाश्रुवेगेन तूष्णीमेवाप्लावितवती ।

चन्द्रापीडस्य तु तदाकर्ण्य भगवति कृतप्रयत्नायामपि भगवत्यामपुण्यभाजास्मिञ्जन्मनि न मया प्राप्तं देव्याः कादम्बर्याश्चरणपरिचर्यासुखं तज्जन्मान्तरेऽपि भगवती संपादयित्री भूयादिति वदत एव हृदयमस्फुटत् । अथ महाश्वेतायाः शरीरमुत्सृज्य ससंभ्रमप्रतिपन्नचन्द्रापीडशरीरायां भर्तृदारिके किं लज्जया पश्य तावदन्यथैव कथमप्यास्ते देवश्चन्द्रापीडो भग्नेवास्य ग्रीवा न मूर्धानं धारयति विचालितोऽपि न किंचिदपि चेतयते नान्तःप्रविष्टतारके समुन्मीलयति विलोचने नायं यथावस्थितपतितानां गात्राणामीष्टे न मनागप्युच्छ्वसित्येव हा देव चन्द्राकृते कादम्बरीप्रिय क्वेदानीं त्वया तया विना गम्यत इत्युन्मुक्तार्तनादासि तरलिकायां तिर्यगाभुग्नचन्द्रापीडमुखनिहितनिश्चलस्तब्धदृष्टिनिश्चेष्टायां महाश्वेतायां आः पापे दुष्टतापसि किमिदं त्वया कृतमपाकृताखिलजगत्पीडस्य देवस्य तारापीडस्य कुलमुत्सादितमनाथीकृताः प्रजाः सहास्माभिर्भग्नाः पन्थानो गुणानामर्गलिताः ककुभोऽर्थिलोकस्येदानीं कस्य वदनमुद्वीक्षतां लक्ष्मीः कोऽवलम्बनं भवतु भूमेः कं सेवन्तां सेवकास्त्वया विना संप्रति व्यसनमेव सेवा वृत्ता वृत्तं समानशीलत्वमस्तमिता परिजनश्लाघा लघूकृतो भृत्यादरो दूरं गतानि प्रियालापितानि समाप्ताः परित्यागकथाः कथं कथावशेषभूतोऽसि भूतपूर्वाः कमुपयान्तु सांप्रतं प्रजाः किं संप्रति समाधानं साधूनामधुना धूर्धरे त्वयि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विपन्ने कः समुद्वहतु देवेन तारापीडेनोढां धुरं धीरस्यां कथं कातरस्येव शुचा भिन्नं हृदयं दयालोरपि ते केयमद्य निर्दयता जातास्मासु । देव प्रसीद सकृदप्याज्ञापयाव भक्तजनाभ्यर्थनां प्रतिपद्यस्व प्राणान्न त्वया विना क्षण प्राणिति पुत्रवत्सलो देवस्तारापीडो न देवी विलासवती नार्य नासो न मनोरमा न राजानो नापि प्रजाः । परित्यज्य सर्वानेकाकी क्व प्रस्थितोऽसि कुतस्तवेयमेकपद एवेदृशी निष्ठु जाता क्व सा गुरुजनस्योपरि भक्तिर्यद्देवमनपेक्ष्य प्रयासीत्यु त्यवनितलविमुक्तात्मन्यारटति परिजने तदाकर्णनोत्कर्णे हा किमेतदित्युद्भ्रान्ते राजपुत्रलोके समुत्प्लुतोत्पक्ष्मनयनदा चन्द्रापीडवदननिवेशितदृशि दीनतरहेषारवकृताक्रन्दे शुचेव प योत्क्षिप्तखुरचतुष्काहतक्ष्मातले मुहुर्मुहुरात्मोन्मोचनायेवा टितखरखलीनकनकशृङ्खलयोगे तुरंगमतां मुमुक्षतीवेन्द्रा पत्रलेखानिवेदितचन्द्रापीडागमना चन्द्रोदयोल्लासिनी वे महोदधेः समकरध्वजा व्याजीकृत्य महाश्वेतादर्शनं मातापि पुरः प्रतिपन्नशृङ्गारवेशाभरणा रणन्नूपुरेण मुखरमेखलादा रम्योज्ज्वलवाससा कल्पितानङ्गबलविभ्रमेण गृहीतसुरभिमा नुलेपनपटवासाद्युपकरणेन नातिबहुना परिजनेनानुगम्यमा पुरः केयूरकेनोपदिश्यमानमार्गा पत्रलेखाहस्तावलम्बिनी म त्वया सह कृतालापा मदलेखे पत्रलेखा कथयति प्रत्यह पुनस्तस्यैकान्तनिष्ठुरहृदयस्य शठमतेर्नृशंसस्यागमनमेव न श्र किं न स्मरसि तत्तस्य मदवस्थामश्रद्दधानस्य हिमगृहके मद्विम दुर्विदग्धबुद्धेर्वक्रभाषितं यत्र सस्मितमालोकितया त्वयैव सुतरामेवासंशयकारि प्रत्युत्तरं दत्तं तदसौ मरणेऽपि मे

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्रद्धात्येवेमामवस्थामन्यथा यदि मदर्थे दुःखमेवमियमनुभवतीत्येतदस्य चेतस्यभविष्यत्तदा तथा गमनमेव नाकरिष्यत्। तथागतोऽप्यसौ यत्किमपि वक्तव्यस्त्वयैव। मया पुनर्दृष्टोऽपि नालपितव्यो नोपालब्धव्यो न चरणपतितस्याप्यनुनयो ग्राह्यो नाहं प्रियसख्या प्रसादनीयेत्यभिदधानैवाचेतितागमनखेदा कादम्बरी चन्द्रापीडदर्शनायोत्ताम्यन्ती तत्रैवाजगाम।

आगत्य चोद्धृतामृतमिव रत्नाकरमिन्दुविरहितमिव निशाप्रबन्धमस्तमिततारागणमिव गगनमपचितकुसुमशोभमिवोपवनमुत्खातकर्णिकमिव कमलमुत्खण्डिताङ्कुरमिव मृणालमवलुप्ततरलमिव हारमुन्मुक्तजीवितं चन्द्रापीडमद्राक्षीत्। दृष्ट्वा च तं सहसा हा किमिदमित्यधोमुखी धरातलमुपयान्ती कथं कथमपि मुक्ताक्रन्दया मदलेखयाधार्यत। पत्रलेखा पुनरुन्मुच्य कादम्बरीकरतलमचेतना क्षितिमुपागमत्। चिराच्च लब्धसंज्ञापि कादम्बरी तथैव मूढेव निश्चलस्तब्धदृष्टिराविष्टेव स्तम्भितेव निष्प्रयत्ना निश्वसितुमपि विस्मृतान्तर्मन्युभारनिस्पन्देव चन्द्रापीडवदनसन्दानिताक्षी श्यामारुणानना ग्रहोपरक्तेन्दुबिम्बेव पौर्णमासीनिशा निशितपरशुपातोत्कम्पिनी लतेव वेपिताधरकिसलया लिखितेव स्त्रीस्वभावविरुद्धेन चेतसा तस्थौ। तथा स्थितां च तामुन्मुक्तार्तनादा सपादपतनं मदलेखाब्रवीत्। प्रियसखि प्रसीदोत्सृजैनं मन्युसंभारमनारटन्ती। बाष्पमोक्षेणामुच्यमानेऽस्मिन्नियतमतिभारोत्पीडितं तडागमिव मृदुसरसं सहस्रधा स्फुटति ते हृदयमिदमित्यपेक्षस्व देवीं मदिरां देवं च चित्ररथम्। त्वया विना कुलद्वयमपि नास्ति। इत्युक्तवतीं मदलेखां कादम्बरी विहस्य प्रत्यवादीत्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अय्युन्मत्तिके कुतोऽस्य मे वज्रसारकठिनस्य हृदयस्य स्फुटनम् आलोक्यैव यन्न सहस्रधा स्फुटितम् । अपि च या जीवितं तस्याः सर्वमिदं माता पिता बन्धुरात्मा सख्यः परिजन इति मया पुनर्म्रियमाणया जीवितभूतं कथंकथमपि समासादितं प्रियतमशरीरं यज्जीवदजीवद्वा संभोगेनानुऽमरणेन वा द्विधा सर्वदुःखानामेवोपशान्तये । तत्किमिति देवेनागच्छता मम प्राणांश्चोत्सृजता सुदूरमारोपितं गुरुतां च नीतमात्मानमश्रुपात मात्रकेण लघूकृत्य पातयामि । कथं स्वर्गगमनोन्मुखस्य देवस्य रुदितेनामङ्गलं करोमि । कथं वा पादधूलिरिव पादावनुगन्तुं मुञ्चता हर्षस्थाने रोदिमि । किं मे दुःखमेवंविधम् । अधुना तु सर्वदुःखान्येव दूरीभूतानि । किमद्यापि रुद्यते । यदर्थं कुलं न गणितो गुरवो नापेक्षिता धर्मो नानुरुद्धो जनापवादो भीतं लज्जा परित्यक्ता मदनोपचारैः सखीजनः खेदितो दुःखिता मे प्रियसखी महाश्वेता तस्याः कृते प्रतिज्ञातमप्यन्यथा कृतं मयेत्येतदपि चेतसि न कृतं तस्मिन्मदर्थमेवोज्झितप्राणे प्राणेशे प्राणान्प्रतिपालयन्ती त्वयैवं किमुक्ताहम् । अस्मिन्समये मरणमेव जीवितम् । जीवितं पुनर्मरणम् । तद्यदि ममोपरि स्नेहः कान्द्र मत्प्रियं हितं वा तन्मदीयमप्यात्मनि स्नेहमारोप्य तथा कर्तव्यं यथा न तातो नाम्बा वा मच्छोकादात्मानं परित्यजतः । यत्तदपि च मयि वाञ्छितं मनोरथं त्वयि पूरयतः । येन परलोकगता अपि मे जलाञ्जलिदायी पुत्रकस्त्वयि भविष्यति । अहं पुनरुज्ज्वलितचितानले ज्वालामालिनि देवस्य चन्द्रापीडस्य कण्ठलग्ना निर्वापयाम्यात्मानम् । इत्यभिदधानैव कृतविधारणानुबन्धां मदलेखामवच्छिद्यापसृत्य महाश्वेतां कण्ठे गृहीत्वा निर्विकारवदनैव पुनस्तामवादीत् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रियसखि तवास्ति कीदृश्यपि प्रत्याशा ययानुरागपरवशा नः समागमकाङ्क्षिणी क्षणे क्षणे मरणादधिकानि दुःखान्यनुवन्ती जीवितमलज्जाकरमननुशोच्यमनुपहसनीयमवाच्यं धारसि। मम पुनः सर्वतो हताशायाः सापि नास्ति । तदामन्त्रये प्रियसखीं पुनर्जन्मान्तरे समागमाय । इत्यभिधाय तदवस्थेऽपि दयवल्लभे समागमसुखमिवानुभवन्ती सरभसमुपरिपर्यस्तवकुरहस्तोद्वान्तकुसुमनिवहेन मूर्ध्नार्चयित्वा चन्द्रापीडचरणौ वत्स्वेदामृतार्द्राभ्यां हस्ताभ्यामुत्क्षिप्याङ्केन धृतवती । अथ त्करस्पर्शेन समुच्छ्वसत इव चन्द्रापीडदेहाज्झटिति तुहिनमयव सकलमेव तं प्रदेशं कुर्वदव्यक्तरूपं किमपि चन्द्रधवलं योतिरिवोज्जगाम । अनन्तरं चान्तरिक्षे क्षरन्तीवामृतमशरीरिणी वागश्रूयत । वत्से महाश्वेते पुनरपि त्वं मयैव समाश्वासिता वर्तसे । पुण्डरीकशरीरं मल्लोके मत्तेजसाप्यायमानमविनाशि भूयस्त्वत्समागमाय तिष्ठत्येव । इदमपरं मत्तेजोमयं तत एवविनाशि विशेषतोमुना कादम्बरीकरस्पर्शेनाप्यायमानं चन्द्रापीडस्य शरीरं शापदोषाद्विमुक्तमप्यात्मना कृतशरीरसंक्रान्तेर्गिन इव शरीरमत्रैव भवत्योः प्रत्ययार्थमाशापक्षयादास्ताम् । तदग्निना संस्कार्यम् । उदके वा क्षेप्तव्यमुत्स्रष्टव्यं वा । प्रयत्नतः रिपालनीयमासमागमप्राप्तेरिति ।

तां तु श्रुत्वा किमेतदिति विस्मयाक्षिप्तहृदयाः सर्वा एव गनतलनिवेशितनिर्निमेषदृष्टयो लिखिता इव पत्रलेखावर्जमतिन् । पत्रलेखा तु तेन तस्य ज्योतिषस्तुषारशीतलेनाल्हादहेतुना र्शेन लब्धसंज्ञोत्थायाविष्टेव वेगाद्धावित्वा परिवर्धकहतादाच्छिद्येन्द्रायुधमस्मद्विधानां तु यथा तथा भवतु त्वं पुनरेव

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मेकाकिनि विना वाहनं दूरं प्रस्थिते देवे क्षणमपि न तिष्ठ इत्यभिदधाना तेनैवेन्द्रायुधेन सहात्मानमच्छोदसरस्यक्षिप अथ तयोर्निमज्जनसमयानन्तरमेव तस्मात्सरःसलिलात्तापस सहसैवोदतिष्ठत्। उत्थाय च दूरत एव द्वामनाष्पजलनिरो कुल्याप्यावद्धलक्षया दृष्ट्या विलोकयन्तीं महाश्वेताम शोकगद्गदमवादीत्। गन्धर्वराजपुत्रि जन्मान्तरगतः प्र ज्ञायतेऽयं जनो न वेति।

सा त्वेवं पृष्टा शोकानन्दमध्यवर्तिनी ससंभ्रममुत्थाय प्रणामा प्रत्यवादीत्। भगवन्कपिञ्जलैवंविधाहमपुण्यवती भवन्तमपि न प्रत्यभिजानामि। अथवा युक्तैवेदृशी त्मज्ञायां संभावना याहमेकान्तत एव व्यामोहहता स्वर्गं देवे पुण्डरीके जीवामि। तत्कथय केनासावुत्क्षिप्य नीतः वा नीतः किं वास्य वृत्तं क्व वा वर्तते किं वा तवे येनैतावता कालेन वार्तामपि न दत्तवानसि कुतो वा त्व देवेन विनैवागतोऽसीति। स त्वेवं पृष्टो महाश्वेतया वि न्मुखेन कादम्बरीजनेन चन्द्रापीडानुगामिना च रा लोकेन वीक्ष्यमाणः प्रत्यवादीत्। गन्धर्वरा श्रूयताम्। अहं हि कृतार्तप्रलापामपि त्वामेकाकिनीमु वयस्यस्नेहादाबद्धपरिकरः क्व मे प्रियसुहृदमपहृत्य गच्छसि धाय पुरुषं तमनुबध्नन्जवेनोदपतम्। स तु मे प्रतिव त्वैव गीर्वाणवर्त्मनि विस्मयोत्फुल्लनयनैरालोक्यमानो वै रवगुण्ठितमुखीभिरुन्मुच्यमानगगनमार्गो दिव्याङ्गनाभि गणमतिक्रम्य चन्द्रलोकमगमत्। तत्र च महोदया सभायामिन्दुकान्तमये महति पर्यङ्के तत्पुण्डरीकशरीरं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


र्यित्वा मामवादीत् । कपिञ्जल जानीहि मां चन्द्रमसम् । अहं खलूदयगतो जगदनुग्रहाय स्वव्यापारमनुतिष्ठन्ननेन ते प्रियवयस्येन कामापराधाज्जीवितं समुत्सृजता निरपराधः संशप्तः । दुरात्मन्निन्दुहतक यथाहं त्वया करैः संतापित उत्पन्नानुरागोऽप्राप्तहृदयवल्लभासमागमसुखः प्राणैर्वियोजितस्तथा त्वमपि कर्मभूमिभूतेऽस्मिन्भारते वर्षे जन्मनि जन्मन्येवमेव प्राप्तानुरागोऽप्राप्तसमागमसुखस्तीव्रतमां हृदयवेदनामनुभूय जीवितमुत्स्रक्ष्यसीति । अहं तु तेनास्य शापहुतभुजा धगित्युद्दीपित इव निरागाः किमनेनात्मदोषानुबन्धेन निर्विवेकबुद्धिना शप्तोऽस्मीत्युत्पन्नकोपस्त्वमपि मत्तुल्यदुःखसुख एव भविष्यसीति प्रतिशापमस्मै प्रायच्छम् । अपगतामर्षश्च विवेकमागतया बुद्ध्या विमृश्य महाश्वेताव्यतिकरमस्याधिगतवानस्मि । वत्सा तु महाश्वेता मन्मयूखसंभवादप्सरसः कुलाल्लब्धजन्मानि गौर्यामुत्पन्ना । तया च भर्ता स्वयं वृतः । अनेन च स्वयंकृतादेवात्मदोषान्मया सह मर्त्यलोके वारद्वयमवश्यमुत्पत्तव्यम् । अन्यथा जन्मनि जन्मनीत्येषा वीप्सैव न चरितार्था :भवति । तद्यावदयं शापदोषो व्यपैति तावदस्यात्मना विरहितस्य शरीरस्य मा विनाशोऽभूदिति मयेदमुत्क्षिप्यानीतम् । वत्सा च महाश्वेता समाश्वासिता । तदिदमत्र मत्तेजसाप्यायमानमाशापक्षयात्स्थितम् । अधुना त्वं गत्वा वृत्तान्तमिमं श्वेतकेतवे निवेदय । महाप्रभावोऽसौ कदाचिदत्र प्रतिक्रियामपि कांचित्करोति । इत्युक्त्वा मां व्यसर्जयत् ।

अहं तु विना कृतो वयस्येन शोकावेगान्धो गीर्वाणवर्त्मना धावन्नन्यतममतिक्रोधनं वैमानिकमलङ्घयम् । स तु मां दहन्निव

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


रोषहुतभुजा भ्रुकुटीविकरालेन चक्षुषा निरीक्ष्याब्रवीत् । त्वमिन्मिथ्यातपोबलगर्वित यदेवमतिविस्तीर्णे गगनमार्गे त्वय द्दामप्रचारिणा तुरंगमेणेवोल्लङ्घितस्तस्मात्तुरंगम एव भूत्वा म लोकेऽवतरेति । अहं तु तमुद्बाष्पपक्ष्मा कृताञ्जलिरवद भगवन्वयस्यशोकान्धेन त्वं मयोल्लङ्घितो नावज्ञया । तत्प्रसीद इमं शापमुपसंहरेति । स तु मां पुनरवादीत् । दत्त एव संप्रति मया नान्यथा भवितुमर्हति । तदेतत्ते करोमि कि मपि कालं यस्यैव वाह्यतामुपयास्यसि तस्यैवावसाने विगतशापो भविष्यसि । एवमुक्तस्तु तं पुनरहमवदम् । न्यद्येवं ततो विज्ञापयामि । तेनापि मे प्रियवयस्येन पु केण चन्द्रमसा सह शापदोषान्मर्त्यलोक एवोत्पत्तव्यम् । तावन्तमपि भगवान्प्रसादं करोतु मे दिव्येन चक्षुषा यथा तुरंगमत्वेपि मे तेनैव सहावियोगेन कालो याया स त्वेवमुक्तो मुहूर्तमिव ध्यात्वा पुनर्मामवादीत् । अनया लतया ते ममार्द्रीकृतं हृदयम् । तदालोकितं मया । उज्जयि मपत्यस्य हेतोस्तपस्यतस्तारापीडनाम्नो राज्ञः चन्द्र तनयत्वमुपगन्तव्यम् । वयस्येनापि ते पुण्डरीकेण तन्म एव शुकनासनाम्नः । त्वमपि तस्यैव परमोपक श्चन्द्रात्मनो राजपुत्रस्य वाहनतामुपयास्यसीति । अहं तु चनानन्तरमेवाधःस्थिते महोदधौ न्यपतम् । तस्माच्च तुरंग दतिष्ठम् । संज्ञा तु मे तुरंगमत्वेपि नैवापयाता । मयास्यैवार्थस्य कृते किंनरमिथुनानुसारी भूमिमेनामानीतो श्चन्द्रमसोऽवतारश्चन्द्रापीडः । योऽप्यसौ प्राक्तनादेवानुरागसं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भिलषंस्त्वयाजानन्त्या शापाग्निना निर्दग्धः सोऽपि मे वयस्यस्य डरीकस्यावतार इति ।

तच्छ्रुत्वा महाश्वेता हा देव पुण्डरीक जन्मांतरेप्यविस्मृत-नुराग मत्प्रतिबद्धजीवित मच्छरण मन्मुखावलोकिन्मन्मय-कलजीवलोक लोकान्तरगतस्यापि तेऽहमेव राक्षसी विनाशा-पजाता । दग्धप्रजापतेरियदेव मन्निर्माणे दीर्घजीवितप्रदाने प्रयोजनं निष्पन्नं यत्पुनः पुनस्ते व्यापादनम् । स्वयं हत्वा पापकारिणी कमुपालभे कमुपयामि शरणं को वा करोतु यि दयां देहि मे प्रतिवचनमित्येतान्यक्षराण्युच्चारयन्त्यपि लज्जे यि च तवाप्युत्पन्नमेव मयि मन्दभाग्यायां वैराग्यं येनैवमपि पन्त्या न प्रतिवचनं मे ददासि । हा हतास्म्यनेनैवात्मनो वितस्योपर्यनिर्वेदेनेत्युन्मुक्तार्तनादा सोरस्ताडनमवनावात्मान-तयत् ।

कपिञ्जलस्तु तथाकृतार्तप्रलापां तां सानुकम्पमवादीत् । र्वराजपुत्रि कस्तवात्र दोषो येनैवमनिन्दनीयमप्यात्मानं न्दापदैर्योजयसि । को वाऽधुना सुखमात्रकेऽनुभवनीये दुःख-वसरो यदेवं शुचात्मानं व्यापादयसि । यदसह्यतरं तत्तु या निर्व्यूढं दृढीकृतं हृदयम् । यथा च शापदोषादिदमुपनतं त्योर्द्वयोरपि दुःखं तथा मया कथितम् । अपि च चन्द्रमसोऽपि रती भवतीभ्यां श्रुतैव । तन्मुच्यतामयमात्मनो वयस्यस्य श्रेयस्करः शोकानुबन्धः । द्वयोरपि श्रेयसे यदेव भवत्याङ्गी-तं तदेवानुबध्यतां व्रतपरिग्रहोचितं तपः । तपसो हि सम्य-कृतस्य नास्त्यसाध्यं नाम किंचित् । देव्या हि गौर्या तपसः प्रभावादतिदुरासदं स्मरारेरपि यावदासादितं देहार्धपदम् । एवं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्वमप्यचिरात्तस्यैव मे वयस्यस्याङ्के निजतपःप्रभावात्पदमवाप्स्य इति महाश्वेतां पर्यबोधयत् ।

उपशान्तमन्युवेगायां च महाश्वेतायां विषण्णदीनमुखी कादम्बरी कपिञ्जलमप्राक्षीत् । भगवन्कपिञ्जल पत्रलेखया च अस्मिन्सरसि जलप्रवेशः कृतस्तात्किं तस्या वृत्तमित्यावेद प्रसादं करोतु भगवानिति । स तु प्रत्यवादीत् । राजपुत्रि स पातानन्तरं न कश्चिदपि तद्वृत्तान्तो मया ज्ञातः । तदधुना चन्द्रापीडस्य क्व पुण्डरीकात्मकस्य वैशम्पायनस्य जन्म किंवा पत्रलेखाया वृत्तमिति सर्वथैवास्य वृत्तान्तस्यावगमाय गते प्रत्यक्षलोकत्रयस्य तातस्य श्वेतकेतोः पादमूलम् । इत्यभिद एव गगनमुदपतत् ।

अथ गते तस्मिन्विस्मयान्तरितशोकवृत्तान्ते चन्द्रापीडमाले गलितनयनपयसि यथास्थानमपसृत्य स्थितवति सपरि राजपुत्रलोके कादम्बरी महाश्वेतामवादीत् । प्रियसखि तु दुःखितां त्वया सह नयता न खल्वसुखं स्थापितास्मि भग विधात्रा । अद्य मे शिरः समुद्घाटितम् । अद्य ते वदनं दर्श प्रियसखीति चाभाषमाणा न लज्जे । तवाप्यहमद्यैव प्रिय जाता । संप्रति मरणं जीवितं वा न दुःखाय मे । तत्को प्रष्टव्यो मया । केन वापरेणोपदेष्टव्यम् । तदेवं गते यत्कर तदुपादिशतु मे प्रियसखी । नाहमात्मना किंचिदपि वेद्मि कृत्वा श्रेयः । इत्युक्तवतीं कादम्बरीं महाश्वेता प्रत्यवादी प्रियसखि किमत्र प्रश्नेनोपदेशेन वा । यदेवेयमनतिक्रम प्रियतमसमागमप्रत्याशा कारयति तदेव करणीयम् । पुण्ड वृत्तान्तस्त्वद्य कपिञ्जलहस्तात्स्फुटीभूतः । तदा तु वाङ्मात्रे

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ाश्वासितया मया न पारितमन्यत्किंचिदपि कर्तुम् । तत्वमपि किं करोषि यस्याः प्रत्ययस्थानमिदं चन्द्रापीडशरीरमङ्कवास्ते । तदन्यथात्वेऽस्य करणीया चिन्ता । यावत्पुनरिदविनाशी तावदेवास्यानुवृत्तिं मुक्त्वा किमन्यत्करणीयम् । प्रत्यक्षाणां हि देवतानां मृदश्मकाष्ठमय्यः प्रतिमाः श्रेयसे पूजास्कारेणोपचर्यन्ते । किं पुनः प्रत्यक्षदेवस्य चन्द्रापीडनामान्ततस्य चन्द्रमसो मूर्तिरनाराधितप्रसन्ना ।

इत्युक्तवत्यां महाश्वेतायां कादम्बरी तूर्णमेवोत्थाय तरलिया मदलेखया च सहोत्थाप्य तामखेदार्हां चन्द्रापीडतनुमन्यस्मिञ्छीतवातातपवर्षादिद्वन्द्वदोषरहिते शिलातले शनैरखेदयन्ती पयित्वापनीतशृङ्गारवेषाभरणा मङ्गलमात्रकावस्थापितैकरभूषणा स्नानशुचिर्भूत्वा परिधाय धौतशुचिनी दुकूले प्रक्षाल्य नः पुनर्गाढलग्नमधरकिसलये ताम्बूलरागमुपर्युपरि निमीलिगतबाष्पवेगोत्तरललोचनान्यदेव किंचिदचिन्तितमनुत्प्रेक्षिमाशिक्षितमनभ्यस्तमनुचितमपूर्वं बाला बलाद्विलोभप्रकृतिनाकार्यपण्डितेन दग्धवेधसा कार्यमाणा यान्येव सुरभिकुसुमधूपालेपनादीनि सुरतोपभोगायानीतानि तैरेव देवतोचितामपचितिं संपाद्य चन्द्रापीडमूर्तौ मूर्तिमतीव शोकवृत्तिरार्तरूपा रूपान्तरमिव तत्क्षणेनैवोपगता गतजीवितेव शून्यमुखी मुखावलोकिनी चन्द्रापीडस्य पीडोत्पीडितहृदयापि रक्षन्ती बाष्पमोक्षमुद्दामवृत्तेः शोकादपि मरणादपि च कष्टतमामवस्थामनुभवन्ती तथैवाङ्के समारोपितचन्द्रापीडचरणद्वया दूरागमनखिन्नेनापि बुभुक्षितेनाप्रतिपन्नस्नानपानभोजनेन मुक्तात्मना राजपुत्रलोकेन स्वपरिजनेन च सह निराहारा तं दिवसमक्षपयत् ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


यथैव च दिवसमशेषं तथैव तां दूरीकृत्यात्रलासह भीतिमपरित्यक्तचन्द्रापीडचरणाचेतितस्वशरीरखेदा जाग्रती सम विष्टैव क्षपां क्षणमिव क्षपितवती । प्रातश्च तदुन्मीलितं कि मिव चन्द्रापीडशरीरमालोक्य शनैः शनैः पाणिना स्पृश पार्श्वस्थितां मदलेखामवादीत् । मदलेखे न वेद्मि किं स्वे दुत निर्विकारतयैवेति । अहं तु तादृशीमेवेमां तनुमालोकयामि तत्त्वमपि तावदादरतो निरूपय । इत्येवमुक्ता मदलेखा प्रत्यवादीत् । प्रियसखि किमत्र निरूपणीयम् । अन्तरात्म विरहाद्व्यापारमात्रमस्योपरतम् । अन्यत्तादृशमेवेदं व्याको शतपत्राकार मनागप्यनुन्मुक्तं श्रिया वदनम् । तत्सत्यासौ भाग कपिञ्जलवेदितश्च शापवृत्तान्त इति संभावयामि । इत्युक्तव मदलेखायामानन्दनिर्भरा महाश्वेतायै दर्शयित्वा चन्द्रापी चरणतलनिबद्धजीविताय राजपुत्रलोकायापि दर्शितवती ।

स तु विस्मयोत्फुल्ललोचनः सर्व एवावनितलनिवेशितशि प्रणम्य चन्द्रापीडचरणौ रचिताञ्जलिर्जानुद्वयेनावनौ स्थित कादम्बरीं व्यजिज्ञपत् । देवि त्वत्प्रभावोऽयं यदेवमस्मानपुण्यव परित्यज्य दूरं गतस्यापि देवस्य तादृशमेवेदं प्रसन्नप्रभमिन्दुमण्ड द्युतिहारि वीक्ष्यते वदनम् । तथैव चेदं चरणयुगलमवभा पुरेव प्रोत्फुल्लतामरसच्छायम् । तथैव च पुनः प्रसादानुभवप्रत्या लालसं हृदयम् । अन्यच्चैतन्मनुष्येषु केन कदा दृष्टं श्रुतम भूतं वा यदस्माभिः । इत्यभिहितवति राजलोके ससखीज सपरिवारा चोत्थाय स्वयमेवोचितदेवतार्चनकुसुमा स्नात निर्वर्तितचन्द्रापीडशरीरपूजासंस्कारा शरीरस्थितिकरणायादि राजलोकम् । निर्वर्तितस्नानाशने च तस्मिन्राजलोके आत्मना

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



महाश्वेतयोपनीतानि तयैव सह सपरिवारा फलान्युपयुक्तवती । कृताहारा च पुनस्तथैव चन्द्रापीडचरणावङ्के कृत्वोद्वहन्ती तमपि दिवसमनयत् । अन्येद्युश्चोपजातदृढतरप्रत्यया चन्द्रापीडशरीराविनाशं प्रति मदलेखामवादीत् । प्रियसखि देवस्य शरीरमिदमुपचरन्तीभिरवश्यमाशापक्षयादस्माभिरत्र स्थातव्यम् । तदिममद्भुतरूपं वृत्तान्तं तातस्याम्बायाश्च गत्वा निवेदय । येन नान्यथा मां संभावयतो दुःखेन वा मदीयेन न तिष्ठतः । यथा च मामेवंविधां दुःखभागिनीमागत्य न पश्यतस्तथा करिष्यसि । न शक्नोम्यहं तातमम्बां च दृष्ट्वा दुःखावेगं धारयितुम् । यथा चोपरतमपि देवमालोक्य न रुदितं सा किमपरमधुना निःसंशयितजीविते देवे रोदिमि । इत्यभिधाय तां व्यसर्जयत् ।

गतागतया च तया प्रियसखि सिद्धं तेऽभिवाञ्छितमेवं संदिष्टं तातेन चित्ररथेनाम्बया च मदिरया गाढतरमालिङ्ग्य शिरस्युपाघ्राय च वक्तव्यावयोर्वचनाद्वत्से कालमेतावन्तं मनस्येव नैतदावयोरासीद्यथा जामातृसहिता वत्सा द्रष्टव्येति तदयमेवावयोः परमानन्दो यद्वत्सयैव स्वयं जामाता वृतस्तत्राप्यपरं भगवतो लोकपालस्य चन्द्रमसोऽवतारस्तत्कल्याणैः शापावसाने जामात्रा सहैवानन्दबाष्पनिर्भरमाननारविन्दं ते द्रक्ष्यावः । इत्यावेदिते निर्वृतेनान्तरात्मना दैवतवदुपचरन्ती तच्चन्द्रापीडशरीरमतिष्ठत् ।

अथापगतवति जलदसमये घनविरोधोद्बन्धनादिवोन्मुक्ते जीवलोके जम्बालविगमात्सर्वतस्तुरगखुरसहासु भूमिष्वेकदा चन्द्रापीडचरणमूलोपविष्टां कादम्बरीमुपसृत्य मेघनादो व्यज्ञपयत् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


देवि देवो युवराजश्चिरयतीत्युत्ताम्यता हृदयेन तारापीडेन देव्या विलासवत्यार्यशुकनासेन च वार्ताहराः प्रहि ते च देव्या एव शोकशल्यघटनां परिहरद्भिरस्माभिर्य सर्वमाख्यायाभिहिताः । भवतां हस्तेन देवेन चन्द्रापीड किंचित्प्रतिसंदेष्टव्यम् । नापि देव्या कादम्बर्या । तदकृतविलम्ब गत्वैनमखिलं वृत्तान्तं लोकार्तिहरायावनितलपतये देवाय पीडायावेदयत । इत्यभिहिताश्च तेऽस्मान्मन्युनिर्भराः प्रत्यवे यथा भवद्भिः कथितं तत्तथा । तिष्ठतु तावत्क्रमागतस्नेहो भ वृत्तिर्वा । कार्यगौरवकृतं कौतूहलमेव देवावलोकनं प्रति बलात्क त्यस्मान् । यदि भवतामपि वार्तामात्रकोपलभ्य एवायमर्थ युज्यतेऽस्माकं भवद्वचः समुपलभ्य प्रतिगमनम् । अपि च मपि नेदृशा एवापुण्यकर्माणो ये न पश्यन्ति देवम् । भिरपि चिरतरं चरणपरिचर्यया देवस्य पवित्रित एवात्म अस्माकमपि सर्वदा दर्शनगोचरावस्थानेन प्रसादं कृतवानेव किमद्य जातं येन देवस्य पादारविन्दवन्दनप्रसादेनासंवि विसृज्यामहे । त एव वयं पादलग्नाश्चरणरेणवः । तद्धि देवीं देवस्य युवराजस्य पादप्रणामेनास्माकं सफलयतु भव मनश्रमम् । अन्यथा भूमिमेतावतीमागत्य संभवे सत्यप्रत्यक्षी शरीरा गताः सन्तः किं देवेन तारापीडेन वक्तव्या वय किंवास्माभिर्देवो विज्ञापनीयः । इत्यावेदिते देवी प्रमाण इति विज्ञाप्य तूष्णीं स्थितवति मेघनादे तत्कालसमुत्प्रेक्षि श्वास्य श्वशुरकुलवैक्लव्याद्विलीयमानेव शुचान्तःसचितं कुञ्चिततरलतारकाभ्यामापिबन्ती लोचनाभ्यां गद्गदि वगृह्यमाणकण्ठी कथं कथमपि चिरात्कादम्बरी प्रत्युवा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्थान एव हि तैरगमनमङ्गीकृतम् । अनालोक्य देवमेव याताः सन्तः किमुच्यन्ताम् । अपि चायमेवंविधो लोकातीतो वृत्तान्तो यत्रावलोकनेनापि न संप्रत्ययः समुत्पद्यते । किं पुनरनालोकनेनापि । कैतवमात्रोपदर्शितप्रेमपल्लवा वल्लभतमजीविता वयमपि यावत्पश्यामस्तं तावदनपेक्षितप्राणवृत्तयः स्नेहसद्भावनया सद्भृत्या न पश्यन्तीत्यघटमानकमिदम् । तदविलम्बितं प्रवेश्यताम् । पश्यन्तु देवम् । सफलयन्त्वागमनपरिश्रमेण सार्धं लोचने ततो यास्यन्तीति । आज्ञानन्तरं च मेघनादेन प्रवेशितादूरत एव समं बाष्पपातेन पञ्चाङ्गालिङ्गितमहीतलांश्चन्द्रापीडचरणारविन्दवन्दनसद्भावविहितोत्पक्ष्मनिभृतदृष्टींस्ताननन्यदृष्टिश्चिरमवलोक्य कादम्बरी स्वयमेवाभाषत ।

भद्रमुखाः परित्यज्यतामयं कुलक्रमागतस्नेहसद्भावसुलभः शोकावेगः । यत्खल्वनालोचितावधि दुःखावसानमेव दुःखं तन्मरणभीरोर्भवतु नाम शोकावेगाय । यत्पुनः सुखोदर्कं तत्पुरःस्थितया सुखप्रत्याशयैवान्तरितं नापतति हृदये । तदेष वृत्तान्त एवंविधो येन न केवलमत्र निरवकाशता शोकस्य प्रत्युत सुदूरभिन्नवृत्तेर्विस्मयस्याप्यवसरः । किमत्र परिबोधनेन । अन्यत्रादृष्टपूर्वो मनुष्येषु प्रत्यक्षीकृत एवायं वृत्तान्तः । भवद्भिरपि दृष्टं च पुरेवाविकृततनोर्देवस्य वदनम् । संभाषणापि या जीवाद्विना न संभवति सापि संभावितैव । तद्गम्यतामधुना वार्तोत्सुकमतेर्देवस्य पादमूलम् । न चायं प्रत्यक्षदृष्टोऽप्युपरतशरीराविनाशवृत्तान्तः प्रकाशनीयः । दृष्टोऽस्माभिरच्छोदसरसि तिष्ठत्येतदेवावेदनीयम् । किं कारणमुपरतिः खल्ववश्यंभाविनी प्राणिनां कथंचित्प्रत्ययमुत्पादयति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शरीराविनाशः पुनः प्राणैर्विनाकृतानां दृश्यमानोऽप्यश्रद्धेय एव तस्यावेदनेन सुदूरस्थितमपि गुरुजनं मरणसंशये निक्षिप्य माने प्रयोजनमेव नास्ति । प्रत्यागतजीविते जीवितेश्वरे स्वयं वायमद्भुतभूतोऽर्थो गुरुजने जने वा प्रकटीभविष्यति । इत्येवमादिष्टास्तु ते व्यज्ञपयन् । देवि किं विज्ञापयामः । द्वाभ्यामेव परिज्ञानमस्य वस्तुनः संभवेद्गमनेनास्मदीयेनाकथनेन वा तदस्माकं तु हस्ते द्वयमप्येतन्नास्ति । युवराजवैशम्पायनयोः तया विना दुःखं तिष्ठता देवेन तारापीडेन देव्या विलासवत्या यशुकनासेन संभाष्य प्रेषितानामप्रेषितजीवितानामगमनं इव दूरापेतमेव । गत्वापि दयिततनयवार्ताश्रवणलालस्य राज्ञः देव्या आर्यशुकनासस्य च दुःखप्लुताक्षीणि मुखान्युद्वीक्ष्य कारवदनानामस्माकमवस्थानमशक्यमेव । इति विज्ञापि तैरेवमेतदित्युक्त्वा कादम्बरी मेघनादमवादीत् । मेघनाद संस्तुतजनस्यैतदनुचितमिति । तथापि गुरूणां चेतःपीडामके माणया मयैवमभिहितम् । इतरदपि दुःखमतः कीदृशं भवति किं पुनरिदं महावज्रपतनसदृशम् । तदेतदपि भवतु । सहापरः कश्चिच्छ्रद्धेयवाक्यः प्रत्यक्षितसकलवृत्तान्तो प्रत्ययाय । इत्येवमादिष्टस्तु मेघनादो व्यज्ञपयत् । देवि राज तु का कथा भृत्यवर्गोऽपि सकल एवायं कन्दमूलफला निश्चयं कृत्वा स्थितो यथास्माकं मध्यादेकेनापि देवपादाद्विना प्रतीपं गन्तव्यमिति ।

भृत्या अपि त एव ये संपत्तेर्विपत्तौ सविशेषं सेवन्ते समुन्नम्यमानाः सुतरामवनमन्ति । आलप्यमाना न समाना संजायन्ते । स्तूयमाना नोत्सिच्यन्ते । क्षिप्यमाणा नापर

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


गृह्णन्ति । अनादिष्टाः कुर्वन्ति । कृत्वा न जल्पन्ति । पराक्रम्य न विकत्थन्ते । विकथ्यमाना अपि लज्जामुद्वहन्ति । महाहवेष्वग्रतो ध्वजभूता लक्ष्यन्ते । दानकाले पलायमानाः पृष्ठतो निलीयन्ते । धनात्स्नेहं बहु मन्यन्ते । जीवितात्पुरो मरणमभिवाञ्छन्ति । गृहादपि स्वामिपादमूले सुखं तिष्ठन्ति । येषां च तृष्णा चरणपरिचर्यायामसंतोषो हृदयाराधने व्यसनमाननालोकने वाचालता गुणग्रहणे कार्पण्यमपरित्यागे भर्तुः । ये च विद्यमानेऽप्यात्मनि न स्वाधीनसकलेन्द्रियवृत्तयः पश्यन्तोऽप्यन्धा इव शृण्वन्तोऽपि बधिरा इव वाग्मिनोऽपि मूका इव जानन्तोऽपि जडा इवानुपहतकरचरणा अपि पङ्गव इव क्लीबा इवाकिंचित्कराः स्वात्मना स्वामिचित्तादर्शे प्रतिबिम्बवद्वर्तन्ते । तत्सर्वमेवायमेवं स्थितो भृत्यजनः । देवस्य च स्थाने देवी वर्तते । तदाज्ञापितं कृतमवधारयतु देवी । इत्युक्त्वा मेघनादस्त्वरितकनामानं कुमारबालसेवकमाहूय तैः सह व्यसर्जयत् ।

अथ सुबहुदिवसापगमे वार्तया विनाताम्यन्ती चन्द्रापीडस्यैवागमनायोपयाचितं कर्तुमवन्तीनगरीदेवतानामवन्तिमातॄणायतनं निर्गता विलासवती देवि दिष्ट्या वर्धसे प्रसन्नास्तेऽवन्तिमातरः परागता युवराजवार्ताहराः इति सहसैव संभ्रमप्रधावितात्परिजनादुपश्रुत्यानन्दबाष्पजललुलितया जलार्द्रेन्दीवरदलस्रजेव विक्षेपदीर्घया दृष्ट्याचर्यन्तीव चिरं दृष्ट्वा ककुभो मृगानेव परिभ्रष्टबालपोतका फूत्कृत्य प्राक्तनवार्ता केनेदममृतं मे वाक्छलाद्दृष्टं कस्यानुकम्पाऽस्मिञ्जने जाता केन दृष्टः कियद्दूरे ... ते किं वानेन कथितं कुशलं मे वत्स्येति पृच्छन्त्येवाद्राक्षीदितस्ततो यथादर्शनं संघशः प्रधावितेनोज्जयिनीनिवासिना

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



जनेनागतो युवराजः कियद्दूरे भवद्भिः परित्यक्तो दिवसे क्व वर्तते क्व वा भवद्भिर्गत्वा दृष्टः क्व वातिकष्टस्तेनातिवाहि वाहनमात्रसाधनेन धाराधरागमस्तुरगपृष्ठगतस्य मन्ये क्व एवापक्रान्त । इत्येतानि चान्यानि प्रतिपदं पृच्छ्यमानानप्यद प्रतिवचसो त्वरितकसमेतांस्ताँल्लेखहारकान् । आलोक्य तस्मि मातृगृहाङ्गणे स्थित्वा तेषामाह्वानायादिदेश ।

अनन्तरं चातर्किितापतितदर्शनेनोत्पादितद्विगुणदुःखावे न्मुषितानिवोन्मुक्तानिवेन्द्रियैर्दारुमयानिव शून्यशरीरान्निर्गं तानिवोपसर्पतः पुरस्तात्पतन्तीव बाष्पान्धा साध्वसस्खलितचर कमला कतिचिद्गत्वा पदानि गद्गदस्वरमुच्चैरकृतप्रणामाने वादीत् । भद्राः कथयताशु वत्सस्य मे वार्तामात्रम् । त्वन्यथैव कथयति मे हृदयम् । ध्रियते मे वत्सः । दृष्टो वा भवद्भिः इत्येवं पृष्टास्तु ते सहसागतबाष्पवेगमवनितलनिवेशि त्तमाङ्गाः प्रणामापदेशेनोत्सृज्य कृच्छ्रादिवाभिमुखमुन्नमितव व्यज्ञपयन् । देवि दृष्टोऽस्माभिरच्छोदसरस्तीरे युवराजः । शेष त्वरितको निवेदयिष्यति । इत्येवमभिदधत एव तानुद्बाष्पमु विलासवतीं प्रत्युवाच । किमपरमयं तपस्वी निवेदयिष्यति दूरतः प्रभृत्यपसृतप्रहर्षेणैवोपसर्पणेन प्रतिलेखमालिकाशून् शिरोभिराविषण्णदूनैराननैः प्रयत्नसंरक्षिताश्रुमोक्षदुःखिताभ् लोचनाभ्यां मन्युखेदसमवधारणेन च दृष्टैर्यदावेदितव्यं तद्भवद्भि वावेदितम् । हा वत्स जगदेकचन्द्र चन्द्रापीड चन्द्रानन च शीतलप्रकृते चन्द्राभिरामगुण लोचनानन्दभूत किं भूतं ते नायातोऽसि । तात चन्द्रापीड पीडिता ब्रवीमि न कोपादु लभमाना । न युक्तमेतत्तवाम्ब न विलम्बं मनागपि करोमीति त

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मे पुरः प्रतिज्ञाय क्षणमप्यन्यत्र क्वाप्यवस्थातुम् । वत्स गच्छत एव ते मयास्य हतहृदयस्य शङ्कयैव ज्ञातं दुर्लभं मे वत्सस्य पुनर्मुखावलोकनमिति । बलाद्धृतोऽसि । किं करोमि । को वात्र दोषो वत्सस्य । मन्दभाग्याया ममैवैतान्यपुण्यानां विलसितानि । भवन्त्यपुण्यवत्योऽपि लोके न पुनर्मया सदृशी पापकारिणी । यस्यास्त्वमेक एवमकाण्ड एवाच्छिद्य क्वापि नीतोऽसि । विप्रलब्धास्मि दग्धवेधसा । वत्स दूरं गतस्यापि ते प्रपतामि पादयोः । निवर्तस्वैकवारम् । अम्बेत्यालपतस्ते वदनमालोकयितुमुत्कण्ठितं मे हृदयम् । जात दुर्लभक न जानाम्येव किमाजन्मनः शैशवं ते स्मृत्वात्मानमनुशोचामि । उत यौवनाभोगकारिणीं वर्तमानां रूपशोभाम् । आहोस्विदवष्टम्भधीरामुत्प्रेक्ष्योत्प्रेक्ष्यागामिनीं प्रभुताम् । इत्येवं विलपन्तीं मामवलोक्य हृदयस्थितो मैवं कृथाश्चेतासि पुत्र यथा विनापि मया जीवत्येव विलासवती । जात त्वया विना जीवन्त्यापि पितुरेव ते कथं मया वदनं दर्शितम् । न वेद्मि किमिति प्रियतया ते किमाकृतेः प्रत्ययादुत स्त्रीजनसहभुवो मूढभावादेवेत्यद्यापि न श्रद्दधाति मे हृदयमनिष्टं ते । येन न सहस्रधा स्फुटति । स्फुटीकर्तुं च वार्तां ते त्वरितकाङ्क्षीतेव नेच्छामि । वरमनाकर्ण्यैवाश्रवणीयमुपरतास्मीति । तात किं ब्रवीषि यथा किमनेन सुतस्नेहानुचितेन लोकलज्जाकरेण वैक्लव्येनेति । एषा स्थितास्मि ते वत्स वचनातूष्णीम् । न रोदिमि । इत्यभिदधानैवासन्नसखीजनावलम्बितशरीरा मोहमगात् ।

अथानेकसहस्रसंख्येन प्रधावता विलासवतीपरिजनेनावेदिते तस्मिन्वृत्तान्ते मन्दरास्फालनेनेवोच्छालितो महाम्भोधिरुद्भ्रान्त-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



चेताः ससंभ्रममुत्थायार्यशुकनासद्वितीयो यामवती प्रजविनीं करेणुकामारुह्य रयादपिबन्निव पुरोरा किमेतदित्युन्मुक्तनादकलकलेन सर्वतः प्रधावता पदौघेनाकर्षन्निवोद्वासयन्निव पृष्ठत उज्जयिनीं नि नरपतिः । उपेत्य चावन्तिमातृकागृहमवतीर्य ति षण्णोद्बाष्पवदनेन मलयजजलैश्च सिञ्चता कदली वीजयता जलार्द्रैश्च पाणिपल्लवैः संवाहनं कुर्वता कथं कथमपि चे प्रतिपाद्यमानां परिजनेनार्धोन्मीलितलोचनयुगलामुष्णकाल लिनीमिव विलासवतीमपश्यत् । दृष्ट्वा च सहसा प्र नेत्राम्भसा मूर्च्छावशेषापनयनायेव सिञ्चन्समुपविश्य स्पर्शामृतवर्षिणा करेण ललाटे चक्षुषि कपोलयोरुरसि बा स्पृशञ्छनैः शनैर्बाष्पगद्गदमवादीत् । देवि यदि सत्यमेवान्य किमपि वत्सस्य चन्द्रापीडस्य ततो न जीव्यत एव । कि मयमात्मा वत्सस्य कृते सकललोकसाधारणेनामुना वैक्लव्योप तुच्छतां नीयते । इयन्ति शुभान्युपात्तानि कर्माणि । कि क्रियते । नातोधिकस्य सुखस्य भाजनं वयम् । अनुपात्तं हृदयस्य ताडनमपि कुर्वद्भिर्न लभ्यत एवात्रात्मेच्छया । नामापरः कोऽप्यत्रास्ते । यत्तस्मै रोचते तत्करोति । कस्यचिदप्यायत्तः । एवं च पराधीनवृत्तौ सर्वस्मिन्न वास्माभिर्लब्धम् । वत्सस्यातिदुर्लभो जन्मोत्सवः संभावित अङ्कगतस्य मुखमवलोकितम् । उत्तानशयस्योच्चुम्ब्य चरणावुर कृतौ । जानुसंचारिणो रेणुधूसरशरीरस्याङ्के लगतः स्पर्श मनुभूतम् । अव्यक्तमनोहारीणि प्रथमजल्पितानि श्रोत्रे कृता विचेष्टमानस्य बालचाटवो दृष्टाः । गृहीतविद्यस्य गुण

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


न्दितं हृदयम् । उपारूढयौवनस्यामानुषी रूपशोभा शक्तिश्च त्यक्षीकृता । अभिषिक्तस्य यौवराज्ये शिरः समाघ्रातम् । दिग्विज- गतस्य प्रणतः परिष्वक्तान्यङ्गानि । एतावदेव मनोरथशत- ञ्छितस्य वस्तुनो न संपन्नं यद्वधूसमेतस्य निजपदे प्रतिष्ठां कृत्वा पोवने गन्तव्यम् । सर्वाभिवाञ्छितप्राप्तिस्तु महतः पुण्यराशेः लम् । अपरमपि किं वृत्तं वत्सस्यैतदद्यापि न परिस्फुटं केन- दत्र कथितम् । एतावत्तु मया व्यक्तमेव तत्परिजनात्कथयतः तम् । यथास्मत्प्रहितैर्लेखहारकैः सहापरो वत्सस्य मे बाल- वकस्त्वरितक आयातः । स वेत्ति सर्वं वृत्तान्तम् । सोऽपि या न पृष्ट एवेति तं तु तावत्पृच्छामः । ततो जीवितमरण- रन्यतरदङ्गीकरिष्यामः । इत्यभिदधत्येव राजनि परिजना- रितं त्वरितकमाहूय प्रतीहारस्त्वरितमारान्महीतलनिवेशि- त्तमाङ्गमालोकयतु देव इति दर्शितवान् ।

ना तु तथा तमालोक्य चन्द्रापीडस्नेहादेहीत्याहूय हस्ते- त्तमाङ्गे स्पृष्ट्वादिष्टवान् । भद्र कथय किं वृत्तं वत्सस्य येनाग- नाय मया तन्मात्रामात्येन च लिखितेऽपि नायातः । अनाग- कारणं वा न किंचिल्लिखितवानिति । स त्वेवमादिष्टो राज्ञा नतः प्रभृति यथावृत्तं कथयितुमारेभे । राजा तु चन्द्रापीड- दयस्फुटनवृत्तान्तं यावदाकर्ण्य क्षुभितशोकार्णवाक्रान्तिविह्वलः सार्यं करमार्तस्वरस्त्वरितकमवादीत् । भद्र विरम त्वया थितं संप्रति कथनीयम् । मयापि श्रुतं यच्छ्रोतव्यम् । पूर्णो मे दोहदः । निवृत्तं श्रवणकौतुकम् । कृतार्थीभूता श्रुतिः । नन्दितं हृदयम् । समुत्पन्ना प्रीतिः । सुखं स्थितोऽस्मि । हा वत्स यैकाकिना स्फुटतो हृदयस्यानुभूता वेदना । निर्व्यूढा त्वया

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वैशम्पायनस्योपरि प्रीतिः । वयं दुःखभागिनो निस्त्रिंशाः क्रू चाण्डालाः । येषां तवापि हृदयस्फुटने निर्विकारत्वमेव । दे वज्रसारतोऽपि कठिनतरमावयोर्हृदयम् । यच्छ्रुत्वाप्येवं न स स्फुटति । न चापि मरणदुःखभीरवोऽमी वत्समनुगच्छन्ति स प्राणाः । तदुत्तिष्ठ यावदेवातिदूरं न प्रयात्येकाकी वत्सस्ता देवानुगमनाय प्रयतावहे । आः शुकनास किमद्यापि तिष्ठसि अयं स कालः स्नेहस्य । महाकालायतनसमीपे समादि परिचारकाश्चितारचनाय । उपनयत झटिति काष्ठानि काष्ठिकाः किं तिष्ठथैवं संकुचिताः कञ्चुकिनः । गत्वा निष्काम हुताशनप्रवेशोपकरणानि । निष्कारणरुदितेन किमधुना उपरोधपरिलम्बाद्विना प्रविश्य दापयाशेषं द्विजेभ्यः कोषम् कस्य कृतेऽद्यापि पाल्यते । पालनादिकं करणीयमेवा क्षीणं क्षीणपुण्यस्य मे । यात यथाभूमि भूमिपतयः उत्सृष्टाः स्थ । यथा च नाद्यैवानाथतादुःखं जानन्ति प्रजास्त करिष्यथ । कथावशेषीभूतो मे वत्सः । कमपरं संविधाय यामि एवमार्तप्रलपन्तं तारापीडमचेतितात्मपीडया च विलासवत् विधृतशरीरमार्तस्त्वरितको व्यज्ञपयत् । देव स्फुटितेऽपि हृद ध्रियते शरीरेण युवराजः । शापदोषाद्वैशम्पायनस्य च जन्म तथा निरवशेषं शृणोतु तावद्देव इति ।

तारापीडस्तु तदद्भुतमाकर्ण्य कौतुकान्तरितशोक विगतनिमेषेण चक्षुषाविष्ट इव दत्तावधानस्तेन कथ्यमानं दृष्टं यथा श्रुतं यथानुभूतं च निरवशेषं तत्सर्वमश्रौषीत् श्रुत्वा च तमनेकचिन्होत्पादितप्रत्ययमश्रद्धेयं च निरतिशयशो कारकं च विस्मयास्पदभूतं च दुःश्रवं च कौतुककरं च युवरा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


वैशम्पायनयोर्वृत्तान्तमीषदिव निवर्तिताननो विमर्शस्तिमिततारकां दृशं निर्विशेषावस्थे शुकनासमुखे न्यपातयत् । सुहृदस्तु स्वयं दुःखिता अपि विस्मृत्यात्मदुःखं सुहृद्दुःखापनोदायैव यतन्ते यतः शुकनासस्तदवस्थोऽपि स्वस्थवदवनिपतिमुवाच । देव विचित्रेऽस्मिन्संसारे संचरत्सु सुखदुःखमोहमयेषु देवतिर्यग्योनिमानुषेषु त्रैगुणात्मनः प्रधानस्यापि परिणामात्परमाण्वादेर्ब्रह्माण्डपर्यंतस्योत्पत्तिस्थितिप्रलयकारणस्येश्वरस्येच्छया धर्माधर्मसाधनानामिष्टानिष्टकर्तृफलसंबन्धकारिणां कर्मणां वा शुभाशुभानां विपाकात्स्वभावाद्वा स्वयमेवानेकप्रकारमुत्पद्यमानस्य तिष्ठतो विनश्यतो वा नियतवृत्तेः स्थावरजङ्गमस्य न कदाचिदवस्था सा या न संभवति । तत्कुतोऽयं देवस्यात्र वस्तुनि विमर्षः यदि युक्तेर्विचारात्कियन्त्यत्र युक्तिरहितान्यागमप्रामाण्यादेवाभ्युपगतान्यविसंवादीनि दृश्यन्ते । मुद्राबन्धाद्ध्यानाद्वा विषप्रसुप्तस्योत्थापने कीदृशी युक्तिः । अयस्कान्तस्य चायसः समाकर्षणे भ्रमणे वा मन्त्राणां वैदिकानामवैदिकानां वानेकप्रकारेषु कर्मसु सिद्धौ । नानाविधद्रव्यसंयोगानां वा मरणामरणमदनाद्युत्पादनापहरणवशीकरणादिषु शक्तेः समुत्पादनात् । अन्येषां बहुतराणामेवंविधानां च तत्र तत्र सर्वस्मिन्नेवागमः प्रमाणम् । आगमेषु सर्वेष्वेव पुराणेषु रामायणमहाभारतादिषु सन्त्यनेकप्रकाराः शापवार्ताः । तद्यथा । महेन्द्रपदवर्तिनो नहुषस्य राजर्षेरगस्त्यशापदोषादजगरता । सौदासस्य च वशिष्ठसुतशापान्मानुषादत्वम् । असुरगुरुशापाच्च ययातेस्तारुण्य एव जरसा भङ्गस्त्रिशङ्कोश्च पितृशापाच्चण्डालभावः । अपि च गर्भारम्भसंभवे देवेन देव्या वदने विशंश्चन्द्रमा एव दृष्टः । तथा ममापि स्वप्ने पुण्डरीकस्यैव दर्शनमुपजातम् ।


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तदुत्पत्तिं प्रति तयोर्नास्त्येव संदेहः । विनष्टयोः शरी विनाशः कथं कथं वा पुनर्जीवितप्रतिलम्भ इत्यत्राखिललोकप्र प्रभावममृतमेव कारणमावेदितम् । तच्चन्द्रमसि वर्तते इत्येषाप्य वार्ता । तत्सत्यमित्थमेवावगच्छतु देवः । अन्यच्चेदृशा कान्तेरखिललोकाल्हादकारिणोऽन्यत्र संभव एव नास्ति तत्कल्याणैरचिराच्छापावसाने निर्वर्तितगन्धर्वसुतोद्वाहमङ्गलस्य यनपयसो वध्वा सह पादयोः पततः पुत्रत्वमुपगतस्य चन्द्रा नामान्तरितस्य लोकपालस्येव चन्द्रमसो दर्शनेनाजन्मकृ संतापं परित्यक्ष्यति देवः । तत्तयोरयं शापोऽस्माकं पुनर्वर तदस्मिन्वस्तुनि मनागपि न देवेन देव्या वा शोकः कार्यः मङ्गलान्यभिध्यायन्ताम् । अभिमतदेवताराधने धनातिस चान्यजन्मोपार्जितं कुशलमभिवर्ध्यताम् । अकुशलमपि नियमेन तपःपरिक्लेशेन क्षयमुपनीयताम् । अपरमपि यद्यदे श्रेयस्करं श्रूयते ज्ञायते वा तत्तदद्यैवारभ्य क्रियतां कार्य कर्म । न खलु वैदिकानामवैदिकानां वा कर्मणामसाध्यं किंचिदपि । उत्पत्तिरपि तयोः कृच्छ्रलब्धयोरीदृशेनैव प्र णोपजाता ।

इत्युक्तवति शुकनासे सशोक एव राजा प्रत्यवादी सर्वमेवमेतद्यथार्थेणाभिहितं कोऽन्यो बुध्यते । केन वापरेण परिबोधनीयाः । कस्य वापरस्यास्माभिर्वचनं करणीयम् । तद्वत्सस्य मे वैशम्पायनदुःखात्स्फुटं हृदयस्याग्रतो दृष्टिलग्न मेवान्यदन्तरयति । तदेव पश्यामि । तदेव शृणोमि । तदेवोत् तदेवमप्रत्यक्षिते वत्सस्य वदने संस्तम्भमेवात्मनो न शक् कर्तुम् । यत्र च ममाप्ययमीदृशः प्रकारस्तत्र

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


रित्रोधनं दूरापेतमेव । तद्गमनादृतेऽन्य उपाय एव नास्ति जीवितसंधारणाय इत्येवमवधारयत्वार्यः । इत्युक्तवति तारापीडे चिरात्तनयपीडया पत्युः पुरः परित्यज्य लज्जां विलासवती कृताञ्जलिरुच्चैर्जगाद । आर्यपुत्र यद्येवं तथापि किमपरं विलम्बितेन । निर्गता एव वयम् । दीयतां प्रयाणम् । उत्ताम्यति मे हृदयं वत्सस्य दर्शनाय। यदुःखापनोदार्थं स्फुटितमाशंसितं हृदयस्यासीत्तदपि संप्रति दर्शनाकाङ्क्षया न रोचत एव। जानामि वरं दीर्घकालमपि दुःखान्यनुभवन्ती सकृदपि वत्सस्य दर्शनाय जीवितास्मि न पुनरसह्यदुःखोपशान्तये संप्रत्येव मृतास्मीति । तदस्य दुराशानिबन्धनस्य सर्वात्यय निवारणोपायस्य वत्साननावलोकनोन्मुखस्य गमनमपि हृदयस्य तावद्विनोदतां व्रजतु । इति वदन्तीमेव विलासवतीमागत्यान्यतमः शुकनासस्यात्मसमः परिणतवयाः षट्कर्मा समुपसृत्य स्वस्तीत्युक्त्वा व्यज्ञपयत् । देवि सर्वत्रैवापरिस्फुटेनामुना वार्ताकलकलेनाकुलीक्रियमाणहृदया मनोरमा स्वयमेवागता । राज्ञो लज्जमाना नोपगता स्थानमिदम् । तदेषा मातृगृहस्य पृष्ठतस्तिष्ठति । पृच्छति च देवीम् । किमेभिः कथितम् । जीवति मे वत्सो वैशम्पायनः । स्वस्थशरीरो वा । ढौकते वा पुनर्युवराजस्य । क्व वर्तते । तावागमिष्यतो वा कियद्भिर्दिवसैरिति । राजा तु तदुपरतिवार्ताया अपि कष्टतममाकर्ण्य दीर्ण इव शुचा शतगुणीभूतशोकोत्प्लुताक्षो विलासवतीमवादीत् देवि न श्रुतं किंचिदपि वत्सयोः प्रियसख्या ते अन्यतश्च श्रुत्वा कदाचिज्जीवितेनैव वियुज्यते । तदुत्तिष्ठ स्वयमेव धैर्यमालम्ब्य सर्ववृत्तान्तानुकथनेन संस्थापय प्रियसखीं तयाप्यार्यशुकनासेन

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सह यातव्यम् । इत्येवोत्थाप्य सपरिजनां विलासवतीं व्यसर्जय आत्मनापि शुकनासेन सह गमनसंविधानमकारयत् । राजा वहुभिर्दिवसैरासप्तादाच्छोदम् । आसाद्य चा रान्वार्तान्वेषणाय त्वरितकेन सार्धं प्रहितवान् ।

अथ तैः सहागच्छन्तमुज्झितात्मसंस्कारमलिनीकृत मेघनादपुरःसरं सकलमेव चन्द्रापीडचरणतलनिबद्धजीवितं पुत्रलोकमालोक्योल्लसिततनयशोकोर्मिवेगाक्रान्तोऽप्युच्छ्वसित दृष्टीभूतचन्द्रापीडदेहाविनाशप्रत्ययान्तरात्मा निवृत्य सा पर्याणवर्तिनीं विलासवतीमवादीत् । देवि दिष्टचा वर्धसे ध्रियते सत्यमेव शरीरेण वत्सः । येन सकल एवायं तच्चरण लानुजीवी राजपुत्रलोकस्तत्पादमूलादागत इति । सा तु तदा किंचिदात्मपाणिनवोत्सारितावरणसिचयांचाला निश्च दृष्टचा चिरमिव विलोक्य तनयनिर्विशेषं राजपुत्रलोक च्छिन्नाश्रुधारापि धैर्यमुत्सृज्योच्चैरारटितवती । हा वत्स सहपांशुक्रीडितस्यैतावतो राजपुत्रलोकस्य मध्ये त्वमेवैको दृश्यस इति । तथारटन्तीं तु तां समाश्वास्य दूरत एव समं सर्वलोकेनावनितलनिवेशितोत्तमाङ्गं मेघनादमितो ढौ त्यादिश्याप्राक्षीत् । मेघनाद कथय को वृत्तान्तो वर्तते मे स्येति । स तु व्यज्ञपयत् । देव चेतनाविरहाच्चेष्टामात्रकमे गतं शरीरे पुनर्ज्ञायते । दिवसे दिवसेऽप्यधिका कान्तिः समुपजा इति । राजा तु तच्छ्रुत्वा जीवितप्रतिलम्भे समुपजातप्रत्य श्रुतं देव्या मेघनादस्य वचनं तदेहि चिरात्पुनः कृतार्थ दर्शनेनात्मानं पश्यामो वत्सस्य वदनमित्यभिदधान भिवर्धितगतिविशेषया करेण्वा महाश्वेताश्रममगमत् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ सहसैव चन्द्रापीडगुरुजनागमनमाकर्ण्य पुनः प्रकीर्णतारमुक्तानुकारिनयनजलबिन्दुसंदोहा हा हतास्मि मन्दपुण्या दुःखैकभागिनी न जानाम्येव विस्मृतमरणा कियद्यावदहमनेनानेकप्रकारं खलीकारदानैकपण्डितेन दग्धवेधसा परं दग्धव्येत्याभिदधानैव धावित्वा ह्रिया महाश्वेता गुहाभ्यन्तरमविशत्। चित्ररथतनयापि सत्वरोपसृतसखीकदम्बकावलम्बितशरीरा तूष्णीमेव मोहान्धकारम्। तदवस्थयोश्च तयोः शुकनासावलम्बितशरीरो राजा विवेशाश्रमपदम्। तदनु मनोरमावलम्बितशरीरा पुरःप्रधावितोत्प्लुतायततरदृष्टिः क्व मे वत्स इति वदन्ती विलासवती। प्रविश्य च सहजयेव कान्त्या विरहितमुपरतसर्वप्रयत्नं सुप्तमिव तं पुत्रवत्सलः पुत्रमालोक्य यावन्न परापतत्येव तारापीडस्तावद्विलासवती विधारयन्तीं मनोरमामप्याक्षिप्य दूरत एव प्रसारितबाहुलताद्वया रयोन्मुक्तजर्जराभिर्नयनजलधाराभिः प्रस्रवेण च सिञ्चन्ती महीतलमहि जात दुर्लभक चिराद्दृष्टोऽसि देहि मे प्रतिवचनमालोकय सकृदपि मामनुचितं तात तवैतदवस्थानमुत्थायाङ्कोपगमनेन मे संपादय तनयोचितं स्नेहं न चानाकर्णितपूर्वं बाल्येऽपि त्वया मद्वचनमद्य किमेवं प्रलपन्त्या अपि न शृणोषि। जात केन रोषितोस्येषा तोषयामि वत्स पादयोर्निपत्य पुत्र चन्द्रापीड प्रणम तावत्प्रत्युद्गम्य त्वत्स्नेहादेवातिदूरमागतस्यापि पितुः पादौ। क्व सा गता ते गुरुजनभक्तिः। क्व ते गुणाः क्व स स्नेहः क्व सा धर्मज्ञता क्व तत्पितृपक्षपातित्वं क्व सा परिजनवत्सलता। कथमभाग्यैर्मे सर्वमेकपद एवोत्सृज्यैवमौदासीन्यमवलम्ब्यावस्थितोस्यथवा यथा ते सुखं तथा तिष्ठ। वयमुदासीनहृदयास्त्वयीति कृतार्तप्रलापा समुपसृत्य पुनः पुन-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


गाढंगाढमालिङ्ग्याङ्गानि शिरः समाघ्राय कपोलौ चुम्बि... चन्द्रापीडस्य चरणावुत्तमाङ्गे कृत्वोन्मुक्तकण्ठमरोदीत् । ... रुदन्तीं तु तामन्तरितनिजपीडस्तारापीडश्चन्द्रापीडमपरिष्व... सर्वप्रजापीडापहरणक्षमाभ्यां दोर्भ्यामवलम्ब्याब्रवीत् । यद्यप्यावयोः सुकृतैरपत्यतामुपगतस्तथापि देवतामूर्तिरयमशोच... स्तदुन्मुच्यतामयमिदानीं मनुष्यालोकोचितः शोचितव्यवृत्तान्त... अस्मिञ्छोके कृते न किंचिदपि भवति । केवलं गल एव स्फु... रटतो न हृदयम् । निरर्थकं प्रलपितमेव निर्याति वदन... जीवितम् । निरासंगं नयनजलमेव पतति न शरीरम् । अपि वत्सस्यादर्शनमात्रमेवावयोः पीडाकरम् । तच्चैवमालोक्यमाने मु... ऽस्य दूरापेतम् । अपरमस्यामवस्थायामावाभ्यामपि तावत्परमव... कृत्वा मनोरमा शुकनासश्च संधारणीयौ ययोर्लोकान्त... वैशम्पायनः तिष्ठतां तावदेतावपि । यस्याः प्रभावात्पुनर... वनीयो वत्सस्य जीवितप्रतिलम्भाभ्युदयमहोत्सवः सैवेयं ... स्तेऽस्मदागमनशोकोर्मिसंक्रान्तिमूढा सनामग्रहणमुक्ताक्रन्द... प्रियसखीभिर्गृह्यमाणाप्यद्यापि संज्ञां न लभते । तदेनां त... दुत्थाप्याङ्के कृत्वा चेतनां लम्भय । ततो यथेच्छं रोदिष्यामि...

इत्यभिहिता राज्ञा विलासवती क्व सा मे वत्सस्य जीवि... प्रतिलम्भहेतुर्वधूरित्यभिधत्येव चोपसृत्य तदवस्थां तु तामुत्... प्याङ्के कृत्वा मूर्च्छानिमीलनाहितद्विगुणतरनयनशोभं वदनमा... क्यानवरतनयनसलिलास्नानार्द्रमिन्दुशकलशीतलं स्वकपोलं कपो... यार्ल्ललाटं ललाटे लोचने लोचनयोश्च निवेशयन्ती चन्द्रापीडस... शीतलेन च पाणिना हृदये स्पृशन्ती समाश्वसिहि मातस्त्व... विनाद्यैव प्रभृति केन संधारितं वत्सस्य मे चन्द्रापीड...

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शरीरं मातस्त्वममृतमयीव जातासि येन वत्सस्य पुनर्वदनमालोकितमित्यवादीत् । कादम्बरी तु तेन चन्द्रापीडनामग्रहणेन तेन च तन्निर्विशेषवृत्तिना विलासवतीशरीरस्पर्शेन लब्धसंज्ञापि लज्जावनम्रमुखी प्रतिपत्तिमूढा मदलेखायाङ्कादवतार्य परवत्येव यथाक्रममकार्यत वन्दनां गुरूणाम् । आयुष्मति दीर्घकालमविधवा भवेति कृताशीर्वादा च शनैरुत्थाप्यमानातिनिकटे विलासवत्याः पृष्ठतः समुपवेश्याधार्यत । अथ प्रत्यापन्नचेतनायां चित्ररथतनयायां चन्द्रापीडमेवोज्जीवितं मन्यमानो राजा चिरमिवास्य गाढमङ्गमालिङ्ग्य चुम्बंश्च पश्यंश्च स्थित्वा मदलेखामाहूयादिदेश । दर्शनसुखमात्रमस्माकं विधीयमानम् । तच्चास्माभिरासादितम् । तद्यादृशेनैवोपचारेणैतावतो दिवसानुपचरितवती वधूर्वत्सस्य शरीरं स एवोपचारो नास्मदुपरोधालज्जया वा मनागपि परिहापणीयः । वयं निष्प्रयोजना द्रष्टार एव केवलम् । किमस्माभिरत्र स्थितैर्गतैर्वा । यस्याः करस्य सङ्गेनाप्यायितमेतदविनाशि शरीरं सैव वधूः पार्श्वेऽस्य तिष्ठतु । इत्यादिश्य निर्जगाम । निर्गत्य चोपकल्पितं निजावासमगत्वैव तपस्विवासोचितेऽन्यतमस्मिन्नासन्न एवाश्रमस्य शुचिशिलातलसनाथे तरुलतामण्डपे समुपविश्य निर्विशेषदुःखं सकलमेव राजचक्रमाहूय सबहुमानमवादीत् । न भवद्भिरवगन्तव्यं यथाद्य शोकावेशादेतदहमङ्गीकरोमीति । पूर्वचिन्तित एवायमर्थो यथा वधूसमेतस्य चन्द्रापीडस्य वदनमालोक्य संक्रामितनिजभरेण मया क्वचिदाश्रमपदे गत्वा पश्चिमं वयः क्षपितव्यमिति । ... चायं मे भगवता कृतान्तेन पुराकृतैः कर्मभिर्वा विरूपैरेवं समुपनमितः । किमपरं क्रियते । अनतिक्रमणीया नियतिः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अप्रापणीयं नानुभूतमात्मचेष्टाकृतं वत्सस्य मुखम् । प्रजा- पालनफलं तु पुनर्भवद्भुजेष्वेवमक्षतेष्वविरहितमस्येव । अन्यथापि चेष्टमानेष्वस्मासु सर्वमेवावस्थितम् । तदिच्छामि चिरका- मनोरथं पूरयितुम् । धन्याश्च जरापीतसारतनवस्तनयेष्वात्म- मासज्य लघुशरीराः परलोकगमनं साधयन्ति । यच्च बल- पाशमाधाय यदा तदानिच्छतोप्याच्छिद्यत एव कृतान्ते- तद्यदि पात्रे क्वापि स्थापयित्वा निजपदं जरापरिभुक्तायुः- निष्प्रयोजनस्थितिना सर्वसुखवाह्येन मांसपिण्डेन शरीर- परलोकसुखान्युपार्ज्यन्ते लाभ एवायम् । तदस्य वस्तुनः भवन्तो मया प्रार्थनीयाः । इत्युक्त्वा सन्निहितान्यपि परि- ज्योचितानि सर्वसुखान्यनुचितान्यङ्गीकृत्य वन्यानि तपो- दुःखानि तथा हि हर्म्यबुद्धिं वृक्षमूलेष्वन्तःपुरस्त्रीप्रीतिं ल- संहृतजनस्नेहं हरिणकेषु निवसनरुचिं चीरवल्कलेषु कु- रचनाभियोगं जटास्वाहारहार्दं कन्दमूलफलेषु शस्त्रधारणव्यसन- सूत्रे प्रजाप्रतिपालनशक्तिं समित्कुशकुसुमेषु नर्मालापं संकथासु समररसमुपशमे जयेच्छां परत्र कोशस्पृहां तपस्य- मौने सर्वोपभोगरागं च वैराग्ये तनयस्नेहं तरुषु संक्रमय्य तपस्विजनोचिताः क्रियाः कुर्वन्गन्धर्वलोकोचितानहरहरुप- न्कादम्बर्या कथमपि समुत्सृष्टलज्जया महाश्वेतया च क्रियमाण- निच्छन्नाविच्छेदात्सायंप्रातश्चानुभूतचन्द्रापीडदर्शनसुखो दु- न्यविगणयन्नरपतिः सपरिवारः समं देव्या शुकनासेन तत्रैवाष्ठित् ।

एवं च कथयित्वा जाबालिर्जराभिभवविच्छायं कृत्वा हारीतप्रमुखान्सर्वानेव ताञ्छावकानवादीत् । दृष्टमायु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

